## तृतीयाध्याये प्रथमं ब्राह्मणम्

**ॐ॥ जनको वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति स ह गवां सहस्रमव-**

मधुकाण्डं समाप्य तदनन्तरं याज्ञवल्क्यकाण्डमारभते । यद्यपि मधुकाण्ड-प्रसिद्ध एवार्थोऽत्रापि प्रतिपादितो भविष्यति, तथापि मधुकाण्डे आगमस्य प्राधान्यमिह तूपपत्तेः प्राधान्यमतो न पौनरुक्त्यम् । ततश्च पूर्वकाण्ड-प्रसिद्धार्थस्योपपत्तिद्वारा दृढीकरणायैवायासः । तत्र पुष्कलधनदानं विद्वत्सम-वायश्च विद्याप्राप्तावुपाय इति प्रदर्शनायाख्यायिका प्रस्तूयते । "गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा" इत्यादि शुश्रूषावत् दानस्यापि विद्यासाधनत्व-दर्शनात् । विद्वत्समवायेन शुश्रूषाऽभिव्यज्यते । "यथा खनन् खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छती" त्यादि स्मृतौ शुश्रूषाया अपि विद्यासाधनत्वदर्शनात् । तस्मात् विद्याप्राप्त्युपाय-प्रदर्शनार्थमेवाख्यायिकाऽऽरभ्यते ।

(जनको ह वैदेह इत्यादि) तत्र विदेहो मिथिला तत्र भवस्तत्रत्यो राजा जनक नामको बभूव । स च वैदेहो जनको बहुदक्षिणेन । बह्वी अनेक-प्रकारा प्रभूता वा दक्षिणा विद्यते यस्मिन् तादृशेन यज्ञेनाश्वमेधादिना । यद्वा शाखान्तरप्रसिद्धबहुदक्षिणनामकेन यागेनेजेऽयजत्, यज्ञं कृतवानित्यर्थः । तत्र जनकस्य बहुदक्षिणायज्ञे कुरुपांचालानां देशानां ब्राह्मणा विद्वान्साः याज्ञिका ब्रह्मवादिनश्च अभिसमेता एकत्रिता बभूवुः । विद्वन्समाकुलपाञ्चा-लादिदेशेभ्यो विद्वांसः समागता इत्यर्थः आगतान् विविधविद्यान् ब्राह्मणान् दृष्ट्वा तस्य ह जनकस्य मनसि एषु को ब्रह्मिष्ठःइत्याकारिका विजिज्ञासा ब्रह्म विद्विषयिणी बभूव सञ्जाता । एषां समवेतानां विदुषां ब्राह्मणानां मध्ये कः

रुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥१॥

तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स ए गात उदजतामिति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा ३ इति ता होदांचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेत्यथ ह जनकस्य वैदेहस्य

स्वित् को जनः अनूचानतमः अनूचानो विद्याकुशलः अतिशयेन विद्यानुवचनकुशलोऽनूचानतम इति । यो ह्यत्र ब्रह्मिष्ठः स्यात् तस्मै बहुधनं दत्वा विद्यांप्राप्स्यामीति विचार्य सह जनकः गोष्ठे गवां सहस्रम् सहस्रसंख्याका गा नवीना दुग्धदानसमर्थाः अवरुरोध गोष्ठे स्थापयामास । तत्रैकैकस्या गोः शृंगयो द्वयोः शृंगयोर्मध्ये सुवर्णस्य पलप्रमाणकस्य दश दश पादाः तत्र पादः पलस्य चतुर्थो भागः आबद्धा बभूवुः निबद्धा बभूवुरिति ॥१॥

ब्रह्मिष्ठस्य दक्षिणार्थं गा अवरोधानन्तरं तान् समवेतान् ब्राह्मणानुद्दिश्य जनकः प्रोवाच—भगवन्तो ब्राह्मणाः पूजनीयविद्वांसो वो युष्माकं मध्ये यः कश्चित् ब्राह्मष्ठो भवेत् स ब्रह्मिष्ठ एता गोष्ठेऽवरुद्धाः सुवर्णविशिष्टा गा उदजताम् स्वगृहं नयतु । ब्रह्मिष्ठोऽस्मीति वादिनं प्रति इयं दक्षिणा परन्तु एतावतीं दक्षिणां श्रुत्वापि ते ह समुपस्थिता ब्राह्मणा न दधृषुर्न धृष्टा बभूवुः कस्यापि एतादृशः साहसोनाभूद् यदहं ब्रह्मिष्ठ इति वदेदिति भावः । अथ मौनान् सर्वानेव विदुषोऽवलोक्य ब्रह्मिष्ठो याज्ञवल्क्यः स्वं स्वकीयं ब्रह्मचारिणं सामाध्येतारं शिष्यं प्रत्युवाच प्रोक्तवान् हे सोम्य ! सामश्रवाः ३ साम तदाख्यं वेदविशेषं शृणोत्यधीते इति सामश्रवाः संबोधने प्लुतभावः एताः जनकेन गोष्ठेऽवरुद्धाः सहस्रसंख्यकाः सुवर्णबद्धा उदज स्वगृहं प्रति नय । ततो गुरोराज्ञानन्तरं स शिष्यस्ता गा होदपंचकार गृहं प्रत्यकालयत् । ततो याज्ञवल्क्येन ब्रह्मवादिपणस्वीकरणेन स्वस्य

**होताश्वलो बभूव सहैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी ३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्म्मो गोकामा एव वयंस्म इति तंह तत एव प्रष्टुं दध्रे होताश्वलः ॥२॥**

**याज्ञवल्क्येति होवाच यदिदं सर्व्वं मृत्युनाप्तं सर्व्वं मृत्युनाभिपन्नं**

ब्रह्मिष्ठता प्रतिज्ञातेति ते सर्वे अवशिष्टा ब्राह्मणा विद्वांसोऽपि चुक्रुधुरतिशयेन क्रोधभाजोऽभवन् । कथं नोऽस्मान् विदुषोऽनादृत्य ब्रह्मिष्ठो अहमिति ब्रुवीत वदेत् ।

अहो धार्ष्टयं याज्ञवल्क्यस्येति । अथानन्तरं जनकस्य वैदेहस्य राज्ञो होता यज्ञकर्मसंपादको ब्राह्मणो य आसीत् स अश्वलः पुरतो भूत्वा एनं ब्रह्मिष्ठपणस्वीकुर्वाणं याज्ञवल्क्यं प्रत्याह भो याज्ञवल्क्य ! किं त्वं ब्रह्मिष्ठोऽसी३ति । प्लुतिरत्रभर्त्सने । भर्त्सयन्नृतं प्रत्युवाचेति । अश्वलो हि जनकस्य पुरोहितस्तमेव सर्वे ब्राह्मणाः त्वमेव ब्रह्मिष्ठोऽसि । तत्कथमयं याज्ञवल्क्यस्ते वृत्तिमपहर्तुं स्वस्य ब्रह्मिष्ठतां कथयति अतस्त्वमेवैनं पराभूतं कुरु इत्यामंत्र्य तं पुरतः कृत्वा याज्ञवल्क्यमनादृतवन्त इति भावः ततो ब्राह्मणानां प्रतिनिधिभूतेनाश्वलेन पृष्ठतः स याज्ञवल्क्यस्तमुवाच । हे अश्वल ! नाहं ब्रह्मिष्ठो ब्रह्मिष्ठाय वयं नमस्कुर्मस्ते तु महाभागा ये जानंति परमात्मानम् । वयं तु गोकामा एव नास्माकं गृहे गावः संति । ततो ब्रह्मिष्ठाभिमानात् न गावो नीताः, अपितु गोकामत्वादेव नीता। एवं सोपहासमुक्तवानिति भावः । ततः सोपहासवचनमाकर्ण्याश्वलो होता क्रोधातिशयेन दह्यमान इव तं याज्ञवल्क्यं प्रष्टुं दध्रे प्रश्नं कर्तुमवस्थितोऽभवदिति ॥२॥

हे याज्ञवल्क्य ! इत्येवं संबोधनं कृत्वा वक्ष्यमाणवचनं प्रोवाच प्रोक्तवान्—

(होताश्वल इति) किमुवाच होताऽश्वलस्तत्राह—

केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होता स मुक्तिः ॥३॥

(यदिदमित्यादि) यदिदं परिदृश्यमानं प्रसिद्धं जगत् । सर्वं देवमनुष्य-तिर्यग्वनस्पत्यादिलक्षणं मृत्युना मरणधर्मकेण कृतान्तेनाप्तं व्याप्तं सर्वं मृत्युनोक्तं जगत् मृत्युना तेनाभिसंपन्नं स्वात्मसात्कृतं "व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं, बद्ध्यन्तेनिपुणैरगाधसलिलान्मत्स्याः समुद्रा-दपि । दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः । कालो हि व्यसनप्रसारितकरो गृह्णातिदूरादपि" इत्यादिनीत्या मृत्वधीनत्वं सर्वस्य चेतनप्रपंचस्य । अथवा मृत्युना व्याप्तं जगदित्यस्यैवविवरणमभिसम्पन्नमिति । हे याज्ञवल्क्य ! एनां मृत्योराप्तिं यजमानो यज्ञकर्ता केन साधनेनातिमुच्यतेऽति-क्रम्य मुच्यते इत्येवं होतुरश्वलस्य वचनं श्रुत्वोवाच याज्ञवल्क्यः हे अश्वल ! होत्रर्त्विजाग्निना वाचा च यजमानो मृत्योराप्तिरुच्यते मृत्युपाशात् अतिक्रान्तो भवतीत्यर्थः । एतदेव स्वयं श्रुतिर्व्याचष्टे—

(वाग्वैइत्यादि) यज्ञस्य कर्मणो वागेव होता । येयं वाक् सोऽयमे-वाग्निः सा एव होता । सा मुक्तिः सातिमुक्तिः अर्थात् यज्ञांगभूतो यो होता तस्मिन् अग्निबुद्धिकरणात्मकसाधनमादायैव यजमानो मृत्योराप्तिमति-क्रान्तो भवति । अयमाशयः यज्ञादिकर्मणोऽगभूते होतरि अग्न्यभेदे नाभिध्या-यमानायां वाचो दृष्टौ कृतायां सत्यां कर्म वीर्यवत्तरं भवति ततोब्रह्मण उपासन-द्वारा संसारसमये एव विश्लिष्टाश्लिष्टपूर्वकालिकोत्तरकालिकपापकर्महरत्व-रूपा मुक्तिर्भवति—

शरीरपातादनन्तरं मूलप्रकृत्यतिक्रान्तस्थानाधिरोहणरूपाऽतिमुक्ति-रपि भवति यज्ञानुष्ठातुर्यजमानस्येति ।

(तद्येयमिति) तत् सा होतरि अध्यस्यमाना वाक् । सा मुक्तिः सातिमुक्तिः 'आयुर्वैघृतमिति' वत् कारणे एव कार्योपचारादिति एतदुक्तं भवति । मुक्ति-

याज्ञवल्क्येति होवाच यदिदं सर्व्वमहोरात्राभ्यामाप्तं सर्व्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्य्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याऽध्वर्य्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्य्युः स मुक्तिः सातिमुक्तिः ॥४॥

याज्ञवल्क्येति होवाच यदिदं सर्व्वं पूर्व्वपक्षापरपक्षाभ्यामाप्तं सर्व्वं पूर्व्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्व्वपक्षापरपक्षयोराप्तिमतिमुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै

रित्यस्य मोक्षप्रतिबन्धकपापनिवृत्तिरित्यर्थः । अतिमुक्तिरित्यस्य वैकुण्ठप्राप्तिरूपो मोक्ष इत्यर्थः "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेत्यादि" श्रुतौ अतिमृत्युशब्दस्य परममोक्षे प्रयोगदर्शनादिति ॥३॥

एव मुक्त्वोपरते याज्ञवल्क्यं पुनरप्यश्वलः प्राह–

(याज्ञवल्क्येति होवाचेत्यादि) स अश्वलः पुनरप्युवाच हे याज्ञवल्क्य! यदिदं सर्वं जगत्, जडचेतनात्मकमहोरात्राभ्यां रात्रिदिवसाभ्यां तदात्मककालेन व्याप्तं गृहीतं, तत्राहोरात्रयोर्व्याप्तिर्नामकतिपयाहोरात्रैर्विनश्वरत्वम्। यद्विनष्टं भवति तदहोरात्रात्मककालेनैव । सर्वमहोरात्राभ्यामभिसंपन्नं वशीकृतम् । तत् केन कं साधनविशेषमासाद्य यजमानस्तरतीति पूर्वपक्षे अध्वर्युणा ऋत्विजा चक्षुषा आदित्येनातिक्रान्तो भवति अध्वर्युप्रभृतिसाधनद्वारा पापमतिक्रम्य भगवदुपासनेनातिमुक्तिं मोक्षं प्राप्नोति यजमान इत्यादिकं पूर्ववदेव सर्वं ज्ञातव्यमिति ॥४॥

पुनरश्वलः प्राह– हे याज्ञवल्क्य ! यदिदं सर्वं पूर्वपक्षापरपक्षकृष्णपक्षशुक्लपक्षाभ्यां व्याप्तं गृहीतं वशीकृतं च । अत्राप्तिर्नाम कतिपय

यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः सातिमुक्तिः ॥५॥

**याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्भणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण**

पक्षविनश्वरत्वं तादृशानि कथं तरतीति पूर्वपक्षे उद्गात्रा ऋत्विजा वायुना प्राणेनातितरतीत्यादिकं सर्वं पूर्ववदेवेति ॥५॥

पुनरपि याज्ञवल्क्यं प्रत्युवाचाश्वलः यदिदमन्तरिक्षं नभोऽनारंबणमिव । अत्र रलयोरभेदात् अनालंबनमिव आलंबनरहितमिवाभाति तं गगनं यजमानः केन साधनेनाक्रमेण क्रमणसाधनेन स्वर्गलोकमाक्रमते कं साधनविशेषमालम्ब्य स्वर्गं लोकं भगवल्लोकमाक्रमते गच्छति । अत्र स्वर्गलोकपदं भगवल्लोकपरकम् । सा मुक्तिः सातिमुक्तिरित्यग्रिमग्रन्थस्वारस्यात् । एवमश्वलेन पृष्टो याज्ञवल्क्यः प्राह–

(ब्रह्मणर्त्विजा मनसा चन्द्रेणेति) चन्द्रमोऽभिन्नत्वेन रूपेण ध्यातं मनो दृष्टयोपासनाविषयीकृतो ब्रह्मा भगवल्लोकस्य प्राप्तौ साधनं भवतीति भावः । अन्यत्सर्वं पूर्ववदेव ज्ञातव्यमिति ।

(इत्यतिमोक्षाः) इत्यनेन प्रकारेणातिमोक्षस्य भगवल्लोकप्राप्त्यात्मकस्य ये प्रश्ना अभवन् ते सर्वेऽपि अश्वलस्य प्रश्नाः परिसमाप्ता इत्यर्थः ।

(अथ संपदः) कथ्यन्ते इति शेषः । तत्र सम्पत् नाम । येन साधनविशेषणाग्निहोत्रादिफलविशिष्टकर्मणां तत्तत्फलमुद्दिश्य संपादनं संपत् । ताः सम्पद इह प्रतिपाद्यन्ते इति भावः ॥६॥

(याज्ञवल्क्येत्यादि) हे याज्ञवल्क्येति सम्बोध्याश्वलः प्रोवाच । अयं होता कतिभिरृग्भिः कियत्संख्यकमंत्रैरद्यास्मिन् यज्ञे हौत्रं कर्म करिष्यति

मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्ति रित्यतिमोक्षा अथ सम्पदः ।।६।।

याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीयां किं ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति ।।७।।

याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुती-

कियत्संख्यकान्मंत्रानादाय यज्ञं सम्पादयिष्यतीति प्रश्नः । ततो याज्ञवल्क्यः प्राह–

(तिसृभिरिति) त्रित्वसंख्याविशिष्टाभि ऋग्भिर्होता यज्ञे हौत्रं कार्यं सम्पादयतीत्युत्तरम् । पुनरश्वलः पृच्छति–

(कतमास्तास्तिस्र इति) अयं च प्रश्नः संख्येयऋग्विशेषविषयकः, पूर्वप्रश्नस्तु केवलं संख्या विषयकः एतावानेव विशेषः पूर्वप्रश्नादुत्तरप्रश्नस्येति याज्ञवल्क्यं प्राह–

(पुरोनुवाक्या चेत्यादि) तत्र प्रथमा पुरोनुवाक्या द्वितीया याज्या तृतीया शस्यैवेति । तत्र यज्ञकालात् पूर्वं प्रयुज्यमाना या ऋक् सा पुरोवाक्या । यागसमये प्रयुज्यमाना यागसाधनीभूता ऋक् । शस्यार्था या ऋक् सा शस्या । यद्यपि एता ऋचोऽनेकास्तथापि जात्यभिप्रायेणैकवचनप्रयोगः । तिसृष्वेव हौत्रिणामृचामन्तर्भाव इति भावः । पुनरश्वलः पृच्छति किं ताभिर्जयतीति हे याज्ञवल्क्य ! ताभिरृग्भिः किं जयति कं फलविशेषं सम्पादयतीति भावः । याज्ञवल्क्यः पुनराह

(यत्किंचेत्यादि) यत्किंचेदं प्राणभृत् तत्सर्वं जयतीति ।।७।।

याज्ञवल्क्येति सम्बोध्याश्वलः पृच्छति । अयमध्वर्युरस्मिन्यज्ञे कति कियत्संख्यका आहुतीर्होप्यति कतिसंख्यकाभिः ऋग्भिर्हवनं करिष्यतीत्ययं हि प्रश्नः । याज्ञवल्क्यः प्राह– तिस्र इतीति त्रित्वसंख्यकाभिरपहुतिभिर्हवनं

**होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या**

करिष्यतीत्यर्थः । पुनः प्रश्नयति–

(कतमास्ता इत्यादि) उत्तरं तिस्र इति । तदेवोपपादयति या हुताः सत्यः समिदाज्याहुतयः उज्ज्वलन्ति अतिशयेन दीप्ता भवन्ति या हुताः सत्योऽतिनेदन्ते अतिशयेन शब्दायामाना भवन्ति । शीत्कारशब्दं कुर्वन्तीत्यर्थः । या हुताः सत्योऽधिशेरते । अधो गत्वा शेरते निस्तब्धाः सत्यः स्थिता भवन्तीति । पुनरश्वलः पृच्छति–

(किं ताभिर्जयतीति) ताभिरुज्ज्वलन्त्यादिभिराहुतिभिः कीदृशं फलविशेषं प्रापयन्ति । उत्तरयति–

(या हुता इत्यादि) या हुता सत्य आहुतीरुज्ज्वलन्ति ताभिराहुतीभिः तदात्मकसाधनमादाय यजमानो देवलोकं प्रकाशमानं लोकं जयति प्राप्नोति । कथं देवलोकमेव प्राप्नोति तत्र कारणं दर्शयति

(दीप्यत इवेत्यादि) हि यस्मात् देवलोको दीप्यते आभासते एव । अत्रत्यानां देवलोको दीप्यते इवाभासते । अत उज्ज्वलत्वगुणविशिष्टानामाहुतीनां कार्यमुज्ज्वलत्वगुणविशिष्टदेवलोकः, प्रकाशमानकारणवत्त्वमुपपन्नमेव भवतीति भावः । या हुता आहुतीरतिनेदन्ते कुत्सितशब्दं कुर्वाणा भवन्ति, ताभिःकुत्सितशब्दर्युक्ताभिराहुतिभिः पितृलोकमेव जयति प्राप्नोति । कुत्सितशब्दयुक्ताभिराहुतिभिः कुत्सितशब्दयुक्तं पितृलोकमेव प्राप्नोति तादृगाहुतीः समर्पको जमानः श्रूयते किल पितृलोकसंबद्धयमपुर्यां मृत्युराजेन यात्यमानानां तद्गतानां हतोहमित्याकारकः शब्दो भवति । ततःपितृलोकस्य कुत्सितशब्दोपेतत्वमिति । या हुता आहुतीरधिशेरते अधो गत्वा स्थिता भवन्ति ताभिराहुतिभिर्मनुष्यलोकं जयति प्राप्नोति, यतो मनुष्यलोकोऽध इव

**हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयति एवमिवहि पितृलोकः या हुता अधिशेरते मनुष्यलोकमेवताभिर्जयत्यध इव हि मनुष्यलोकः ॥८॥**

**याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥९॥**

**याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन्यज्ञे स्तोत्रियाः**

साध्यादिलोकापेक्षया। स्वर्गादिलोकापेक्षया मनुष्यलोकोऽध इव वर्तमानोऽतस्तत्समानत्वान्मनुष्यलोकं तादृशाहुतिसमर्पको यातीति भावः ॥८॥

पुनरश्वलःपृच्छति हे याज्ञवल्क्येति संबोध्य। कतिभिर्देवताभिः विहाराद्दक्षिणत उपविष्टो ब्रह्मा यज्ञं गोपायति रक्षयतीतिप्रश्नः—उत्तरयति।

(एकयेति) विहाराद्दक्षिणत उपविष्टो ब्रह्मा एकया देवतया यज्ञं गोपायति। पुनः प्रश्नयति कतमा सैकेति। का सा एका देवता या ब्रह्मा यज्ञं गोपायति। उत्तरयति—

(मन एवेतीति) मनोलक्षणां देवतां सहायीकृत्य ब्रह्मा यज्ञं गोपायतीति। पुनःप्रश्नयति तया देवतया किं जयतीति। उत्तरमाह याज्ञवल्क्यः

(अनन्तं वै मन इति) कथं मनोऽनन्तम्? तत्राह—

(अनन्ता विश्वदेवाः) अयमाशयः देवशब्दोऽत्रेन्द्रियपरकः स चेन्द्रियो देवः अनन्तो मनोऽधीनश्चेति तदधीनेन्द्रियाणामानन्त्याद भवतिमनसोप्यानन्त्यमिति।

(अनन्तमेवेत्यादि) अनन्तेन मनसा अनन्तं लोकं जयति प्राप्नोति। आनन्त्यगुणविशिष्टतयोपासितेन ब्रह्मणा मनसा अनन्तं साकेतादि लोकपरमेश्वरोपासनाद्वारा प्राप्नोतीत्यर्थः ॥९॥

याज्ञवल्क्येति संबोध्य पुनरप्युवाचाश्वलः अयमुद्गाता अस्मिन्यज्ञे कति

स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोऽनुवाक्याऽपानो याज्या व्यानः शस्या किं ताभिर्जयतीति पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकं शस्यया ततो ह होताश्वल उपरराम ॥१०॥

**इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥**

स्तोत्रियाः स्तोत्रसाधनीताभूः कति ऋचः कित्संख्यका : ऋचः स्तोष्यति ? उत्तरयति । तिस्र इति । पुनः प्र नयति—

(कतमा तिस्रइतीति)

कास्ताः पुरोनुवाक्या च याज्या च शस्यैव तृतीययेति । व्याख्यातपूर्वोऽयं मंत्र । पुनः पृच्छति ।

( कतमास्ता या अध्यात्ममिति ) ताः पुरोनुवाक्याद्या या अध्यात्मं ता कत । भवन्ति तासु किमध्यात्मदृष्टिः कर्तव्येति । उत्तरयतियाज्ञवल्यः ।

(प्राणएव पुरोनुवाक्याऽपानो याज्या व्यानः शस्या) पुरोवाक्यादिषु अध्यात्मप्राणादिदृष्टिः कर्तव्येति भावः । पुनः पृच्छति—

(किं ताभिरित्यादि) किं ताभिरित्यादि प्राणादिदृष्टिविशिष्टपुरोनुवाक्यादिभिः कं लोकविशेषं जयति प्राप्नोतीत्यर्थः । उत्तरयति—

(पृथिवीलोकमित्यादि) अतिरोहितार्थको मंत्रः ।

(ततो हेत्यादि) ततो याज्ञवल्क्येन सर्वप्रश्नामुत्तरे दत्ते सति प्रष्टव्यान्तराभावात् स होताऽश्वल उपरराम । पुनः प्रश्नकरणादुपरतो जात इति ॥१०॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य प्रथमं ब्राह्मणं समाप्तम् ॥ १ ॥

## तृतीयाध्याये द्वितीयं ब्राह्मणम्

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इत्यष्टौ ग्रहा अष्टावतिग्रहा इति यएतेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥१॥

प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धं जिघ्रति ॥२॥

वाग्वै ग्रहः स नाम्नातिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥३॥

जिह्वा वै ग्रहः स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान्विजानाति ॥४॥

(अथ हैनमित्यादि) अथानन्तरमुपरतेऽश्वले एनं याज्ञवल्क्यम् जारत्कारवो जरत्कारुगोत्रोत्पन्न आर्तभागो ऋतभागऋषेः पुत्रः पप्रच्छ पृष्टवान् । किमुक्तवान् तत्राह

(याज्ञवल्क्येत्यादि) हे याज्ञवल्क्येति संबोध्योवाचार्तभागः कति ग्रहाः कियत्संख्यका ग्रहा भवन्ति तथा कत्यतिग्रहाः कियत्संख्यकाश्चातिग्रहा भवन्तीति ग्रहातिग्रहविषयकः प्रश्नः । आर्तभागेन पृष्टो याज्ञवल्क्यः प्राह—

(अष्टौ ग्रहाः) अष्टत्वसंख्यकाः । अष्टावतिग्रहाः । यावत्संख्यकाविशिष्टा ग्रहास्तावत्संख्यका एवातिग्रहाश्चेत्युत्तरम् । पुनः प्रश्नयति ये त अष्टौ ग्रहा अष्टावतिग्रहा ते कतमे इति पूर्वं ग्रहविशेषणसंख्याविषयकः प्रश्न इह तु संख्याविशिष्टसंख्येयविषयकः प्रश्न इति न पौनरुक्त्यम् । एवं पृष्टो याज्ञवल्क्यः प्राह—

(प्राणो वै ग्रहः) अत्र प्राणशब्देन नासिकास्थानसामान्यात् घ्राणे-

चक्षुर्वै ग्रहः स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥५॥

श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥६॥

मनो वै ग्रहः स कामेनातिग्रहेण गृहीतो मनसा हि कामान्कामयते ॥७॥

हस्तौ वै ग्रहः स कर्म्मणातिग्रहेण गृहीतो हस्ताभ्यां हि कर्म्म करोति ॥८॥

न्द्रियं लक्षणया परिगृह्यते । स प्राण एव ग्रहः गृह्णाति स्वाधीनमात्मानं जीवं करोतीति ग्रह इति व्युत्पत्त्या ग्रहपदमिन्द्रियबोधकम् । इन्द्रियं स्वव्यापारकाले जीवं स्ववशे करोतीति । स ग्रह इन्द्रियं अपानेन गन्धेन अत्रापानो गन्धः अपानेन निःश्वासवायुनोपानीयमानत्वात गन्ध उपलक्षितो भवति तेन गन्धलक्षणविषयात्मकेनातिग्रहेण गृहीतो व्याप्तो भवति । अति अतिशयेन स्वस्वविषयिणमिन्द्रियं गृह्णाति स्ववशे व्यवस्थापयतीत्यतिग्रहो विषयो गन्धादिः ग्रहनाम्ना प्राणेन्द्रियादिर्लक्ष्यते । अतिग्रहस्त विषयः एतदेवोपपादयति—

(अपानेनेत्यादि) अत्र प्राण इत्यस्याध्याहारः कर्तव्यस्तथा चापानेनोपनीतान् गन्धान् प्राणेन घ्राणेन्द्रियेण जिघ्रतीति । अथवा अपानपदमिन्द्रियव्यापारपरकम् । एतावता घ्राणेन्द्रियं गन्धात्मकतिग्रहाधीनम् । अत एव "इन्द्रियेभ्यः परा अर्थाः" इत्यादिनेन्द्रियापेक्षया विषयस्य महत्त्वमप्याख्यातं भवति । एवं च ग्रहापेक्षया विषयात्मकातिग्रहस्य प्राबल्येन तन्निग्रहार्थमवश्यं प्रयत्नः कर्तव्यः श्रेयस्कामैरिति भावः ॥८॥

**त्वग्वै ग्रहः स स्पर्शेनातिग्रहेण गृणीतस्त्वचा हि स्पर्शान्वेद-यत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥९॥**

**याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं कास्वित्सा देवता**

वाग्वै ग्रह इत्यादिरभ्य त्वग्वै ग्रह इत्यादि नव मंत्रपर्यन्तमन्त्राणां व्याख्यानं सरलत्वात्पूर्वसमत्वाच्च तद्व्याख्यानाय नेह प्रयत्नः कृत इति ॥९॥

एवं याज्ञवल्क्येन ग्रहातिग्रहप्रश्नस्योत्तरे दत्ते पुनरप्यार्तभागः प्रश्नान्तरं करोति तदेव दर्शयति—

(याज्ञवल्क्येतीत्यादि) हे याज्ञवल्क्येति सम्बोध्यार्तभाग उवाच। यदिदं जडचेतनात्मकं सर्वं जगत् यस्य मृत्योः सर्वमारकस्यान्नं अन्नं यान्न अद्यते इति अन्न सर्वमेव हि मृत्युर्विनाशयति इत्यतो मृत्योः सर्वमन्नम्। स मृत्युः सर्वमारकः कस्या देवताया अन्नमिव भवति मृत्योरपि मारकः क इति प्रश्नः। उत्तरयति—

(अग्निरित्यादि) हे आर्तभाग ! अग्निर्वै मृत्युः स च सर्वं दाहं दहति भस्मसात्करोति, अतः सर्वविनाशकत्वात स मृत्युः स मृत्युः नर-पामन्नम्। जलेन हि वह्निरुपशाम्यति इत्यग्निविनाशकत्वात् जलस्य जलं-मृत्योरग्नेरपि मृत्युर्मारकम्। अग्निर्जलस्यान्तमित्येवमनुचिन्तनं कर्तव्यमिति भावः। अपामग्न्यन्तकत्वानुचिन्तनस्य फलं किमात्मकमिति तद्दर्शयति—

(अप पुनरित्यादि) य उपासक अपामग्न्यन्नकत्वमनुचिन्तयति स उपासकः पुनरपमृत्युमकालमृत्युं जयति, तस्यापमृत्युर्न भवतीति। अथवा अपामित्यत्र जलाभिमानी देवः परमात्मैव गृह्यते परमात्मन एव सर्वमारक-त्वात् "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्थावेद यत्र स" इति श्रुत्यन्तरेण तस्यैव तथाभूतत्वात। न च यदिदं प्रकरणं परमात्मकं तदा अग्नि मृत्युरित्यस्य का गतिरिति वाच्यम्

**यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमपपुनर्मृत्युं जयति य एवं वेद ॥१०॥**

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो ३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥११॥**

प्रकृताग्निशब्दस्य कालाग्निरुद्रपरत्वात् । "अग्निर्वै रुद्र" इति प्रसिद्धेश्च । अत एव ब्रह्मसूत्रकारोऽपि आर्तभागप्रश्नस्य परमेश्वरविषयत्वं समर्थितवानिति भावः ॥१०॥

पुनः प्रश्नयति—

(याज्ञवल्क्येतीत्यादि) हे याज्ञवल्क्येति संबोध्यार्तभाग उवाच । यत्र यस्मिन्काले अयं पुरुषो जीवो म्रियते मृत इति व्यवहारभाग् भवति तदा अस्मात् म्रियमाणात्पुरुषात् प्राणा एतदीया उत्क्रामन्ति गच्छन्ति आहो अथवा नोत्क्रामन्ति । जीवं विहाय यथायथं प्राणा उत्क्रामन्ति अथवा जीवसंयुक्ता एव प्राणा जीवेन सहैवोत्क्रमन्तीति प्रश्नः ? याज्ञवल्क्यः प्राह—

(नेतीति) नोत्क्रामन्ति प्राणा इत्युवाच । किन्तु अत्रैवात्मन्येव समवनीयन्ते संयोज्यन्ते । अत्र समिति एकीकारार्थकः एकीभूततया संयुक्ता भवन्तीत्यर्थं न च जीवं विहायोत्क्रामन्तीति, किन्तु स पुरुषो मृत उद्गतप्राणः सन् उच्छ्वयति श्वयथुं प्राप्नोति, आध्मायति बाह्यवायुद्वारा पूरितदेहो भवति, आध्मातो बाह्यवायुनापूरितः सन् शेते शयान इव दृश्यते । यद्यपि उच्छ्वनत्वादिको देहस्य धर्मो न तु जीवस्य धर्मः अचाक्षुषे तस्मिन् तदसम्भवात् तथापि शरीरजीवयोरभेदोपचारमाश्रित्य तथोक्तिर्द्रष्टव्येति भावः । विस्तरस्तु "प्रतिषेधादिति चेन्न शारीरादिति" ब्रह्मसूत्रे द्रष्टव्यो मूलाक्षरव्याख्यानावसरे तस्य किंचित्करत्वादिति ॥११॥

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं हवे नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥१२॥**

**याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाश-**

हे याज्ञवल्क्येति सम्बोध्यार्तभाग उवाच । यत्र यदा अयं पुरुषो जीवो म्रियते मृत इति व्यवहारभाग् भवति तदा म्रियमाणमेनं जीवं किमेनं न जहाति प्राणातिरिक्तेन्द्रियादिकं न त्यजति त्यजति वेति प्रश्नः ? पूर्वप्रश्ने प्राणं म्रियमाणं न जहाति— इति कथितम् । इह तु प्राणेभ्योऽन्यत् एनं जहाति न वेति प्रश्नः ? उत्तरयति—

(नामेतीति) म्रियमाणं जीवं प्राणव्यतिरिक्तं नाम एनं न जहाति तथा प्रसिद्धेः । यतो नाम अनन्तमविनाशि । पुरुषे मृतेऽपि तन्नाम न विनष्टं भवत्यपितु अनुवर्तते एव । जनकादीनां देहे गतेऽपि इदानीमपि तेषांनामान्यनुवर्तन्ते एवेति । यथा नामानन्तं तथा तदभिमानिदेवता । अनन्ता एवेति दर्शयति—

(अनन्ता विश्वेदेवा इति) यो हि नामानन्त्यं वेद तस्य किं फलं भवति । तद्दर्शयति—

(अनन्तमेवेत्यादि) यो हि नामानन्त्यं विजानाति स उपासकस्तादृशोपासनेन तेनानन्तमेव लोकं जयति प्राप्नोति । अनुवृत्तनामबलेन पुण्यलोकजयो भवति, तस्मादिदानीं जना अपि नामानुवृत्त्यर्थं स्तूपविहारारामादिक तत्तत्कार्यं कुर्वाणाः समुपलभ्यन्ते इति ॥१२॥

पुनर्याज्ञवल्क्येति सम्बोध्यार्तभाग उवाच प्रोक्तवान् । यत्र यस्यामवस्थायामस्य म्रियमाणजीवस्य वागग्निमप्येति । अत्र यद्यपि वागिन्द्रियाणा-

मात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितञ्च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्त्तभ गावामेवैतस्य वेदिष्यावो न नावेतत् स जन इति तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ

कल्पपर्यन्तं स्थायित्वात् अहंकारोपादानकत्वाच्च मरणसमये उपादान-भिन्नोऽग्नौ लयो न सम्भवति तथापि अग्नावप्ययोवाच इत्यस्यायमर्थः वागिन्द्रियाभिमानिदेवभूतस्याग्नेर्वागिन्द्रियाधिष्ठानानुकूलव्यापारराहित्ये-नावस्थानमात्रमेवेति । मरणसमयये म्रियमाणपुरुषसंबन्धि वागिन्द्रियं वागिन्द्रियाभिमानिवह्निर्न तं व्यापारयतीति । वातं तदभिमानिनं प्राणाभिमानिदेवोऽप्येति, चक्षुरादित्यं मनश्चन्द्रं श्रोत्रं दिशः शरीरं पृथिवी-मप्येति तथा आत्मा शरीराश्रित आकाशो भूताकाशमप्येति । लोमानि तदभिमानिदेव ओषधिस्तदभिमानिनमप्येति लोमाभिमानितां परित्यज्य केव-लौषध्यभिमानी भवति । एवं केशा वनस्पतीनप्येतीति तथा अप्सु जलेषु तदभिमानिषु लोहितं रेतश्च निधीयते प्रक्षिप्यते । तदा तस्मिन् समयेऽयं म्रियमाणपुरुषः क्व भवति म्रियमाणपुरुषसम्बन्धिसर्वोप णं यदा स्व-स्वाधारे आश्रितं भवति, तदा जीवः किमाश्रितो भवत प्रश्नः । एवं प्रकारेणार्तभागेन पृष्टो याज्ञवल्क्यः एतदुत्तरं जनसमवाये कथय ऽप्रकट-नीयत्वमाकलय्य वादमार्गेण तं बोधयितुमाह—

(आहरेत्यादि) हे सोम्यार्तभाग ! एतस्य उत्तरं केवलमावामेव वेदिष्यावः सजने एतदुत्तरं न सम्यगिव स्यात् अतो हस्तमाहर एकान्ते गत्वा कथयिष्यामि । यत्रावामेव भविष्याव इतीति । तदनन्तरं जनसमुदाय-रहितं गत्वा मंत्रयांचक्राते विचारणामकुरुताम् । ततस्तौ मिलित्वा विचारादनन्तरं निश्चित्य यदूचतुः कार्यकरणसमुदायात्मकदेहपरिग्रह-कारणत्वेन यदुक्तवन्तौ तत्कर्मैव शरीरपरिग्रहे असाधारणं कारणं शुभाशुभं कर्मैव नान्यत् यत्प्रशशंसतुस्तत्कर्मैव प्रशशंसतुः कर्माधीनमेव पुरुषस्य

ह यदूचतुः कर्म्म हैव तदूचतुरथ यत्प्रशशंसतुः कर्म्म हैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्त्तभाग उपरराम ॥१३॥

इति वृहदारण्यकोपनिषदि तृतीयाध्याये द्वितीयं ब्राह्मणम् समाप्तम् ॥

शरीरग्रहणमिति । यद्यपि पुरुषस्य शरीरपरिग्रहे कालपरमेश्वरेच्छादिकमपि कारणमतः कर्मैवेति कथनमसंगतमिवाभाति, तथापि तेषां कारणत्वमेव न त्वसाधारणकारणत्वं कर्मतु शरीरपरिग्रहेऽसाधारणं कारणं कर्मैव तदेवाश्रयभूतं शारीरस्येति । एतदेव स्पष्टयति–

(पुण्यो वै इत्यादिना) पुण्येन शुभात्मकेन कर्मणा पुण्यः पुण्यशरीरयुक्तो भवति, तथा पापेन कर्मणाधर्मेण पापः पापशरीरयुक्तो भवति । तथा च श्रुत्यन्तरम् "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा ।" तथा च शारीरस्य शरीरपरिग्रहे कर्मैव कारणमिति म्रियमाणावस्थायां कर्माश्रित एव भवतीति भावः ।

(ततो हेत्यादि) ततः सर्वप्रश्नानामुत्तरे जाते स जारत्कारव आर्तभागो विचारा दुपपररामोपरतोऽभूदिति ॥१३॥

इति वृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य द्वितीयं ब्राह्मणं समाप्तम ॥ २ ॥

સમરીતિર્ભદ્દાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્ઞાનકીનાથો વેદવ્યાસો મહામતિઃ॥

## अथ तृतीयाध्याये तृतीयं ब्राह्मणम्

**अथ हैनं भुज्युर्लाभ्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्जलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति**

यदा खलूपरत आर्तभागस्तदा स्वपक्षं पराजितमिव मन्यमानो भुज्युस्तं पराभवनेच्छया प्रश्नार्थं तदुन्मुखोऽभवदितिदर्शयितुं भुज्युर्ब्राह्मणमवतारयति- अथ(हैनमित्यादि)अथोपरते आर्तभगे भुज्युर्नामतः लाभ्यायनि लभस्य गोत्रा- पत्यं लभ्यस्तस्यापत्यं लाभ्यायनिर्ब्राह्मण एनं ह याज्ञवल्क्यं पप्रच्छ प्रश्नं कृ- वानिति। किं पृष्टवान् तत्राह याज्ञवल्क्येत्यादि याज्ञवल्क्येति सम्बोध्य भुज्युरुवाच। मद्रेषु मद्रानामजनपदास्तेषु देशविशेषेषु चरकाः स्वाध्यायग्रह- णार्थं व्रतचरणात् चरकाः अथवा चरन्तीति चराश्चराएवपर्यटनशीलाः पर्यव्रजामपर्यटनं कृतवन्तः गौरवं बोधयितुं बहुवचनम्, सम्पादितब्रह्मचर्योऽ- ध्येतुं मद्रेषु पर्यटनं कुर्वाणोऽहमभवमित्यर्थः ततः किमभूत् तत्राह—

(ते पतंजलस्येत्यादि)ते चरका वय पतंजलस्य नामतः गोत्रतः कापस्य गृहान् कलत्रादिपरिवारयुतान् ऐम गतवन्तः। तस्य पतंजलस्य तन्नाम- कस्य दुहिता पुत्री गन्धर्वेणामानुषेण पिशाचादिना गृहीता पीडिता आसीद- भवत् प्रेताविष्टाऽसीदित्यर्थः। ततः कौतूहलात् जिज्ञासया परीक्षार्थं वातं दुहितृशरीराविष्टं गन्धर्वमपृच्छामः पृष्टवन्तः त्वं कोऽसि नामतः क्रियया वेति तमपृच्छाम इति पूर्वेणान्वयः। एवं पृष्टः स गन्धर्वोऽब्रवीत् उवाच। अहं सुधन्वानामको गोत्रत आंगिरसोहमस्मीत्यब्रवीत्। एवमुक्तवन्तं तु गन्धर्वं- यत्रा वयं लोकानामन्तमवसानमपृच्छामः पृष्टवन्तः। हे गन्धर्व यत्त्वा महं पृच्छामि तत् त्वं जानासि तदा तत् कथयेति भावः। किं वयं पृष्टव- न्तस्तत्राह।

**यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥१॥**

**स होवाचोवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत्पर्येति तां समन्तं**

(अथैनमब्रूवम् इत्यादि) अथेनायं मनुष्योऽपि तु मनुष्यविलक्षणो देवयोनिरिति तस्य विलक्षणज्ञानवत्त्वज्ञानायैनमब्रूमः किमब्रूमस्तत्राह।

(क्वेत्यादि) हे गन्धर्व। पारीक्षिता अश्वमेधयाजिनः क्व कस्मिन्स्थाने कर्मफलोपभोगायाभवन्। अश्वमेधयाजिनः कुत्र गच्छन्ति तत्कथयेति द्विर्वचनं प्रश्नस्य गाम्भीर्य्यातिशयं द्योतयितुमिति। ततो गन्धर्वोऽस्मानवदत् स ततोऽवगतस्वरूपोऽहं त्वा त्वां याज्ञवल्क्य पृच्छामि यत् ते पारिक्षिताः क्वाभवन्निति अमुं गूढप्रश्नं पृष्ट्वा एनं पराभविष्यामीति विचार्य्य प्रश्नं कृतवानिति भावः ॥१॥

(सहोवाचेत्यादि) स एवं पृष्टो याज्ञवल्क्यस्तस्मै प्रोवाच। किमुवाच तत्राह—

(उवाच वै इत्यादि) स गन्धर्वस्त्वामेवमुवाचोक्तवान्। यत् यत्राश्वमेधयाजिनोऽश्वमेधभागकर्तारः फलोपभोगाय गच्छन्ति यं स्थानविशेषमश्वमेधकारिणः प्राप्नुवन्ति तमेव स्थानविशेषं पारिक्षिता अपिगच्छन्तीति तुभ्यमुवाच गन्धर्व इति। एवं प्रकारेणोत्तरे दत्ते सति पुनरप्युवाच याज्ञवल्क्य प्रतीति दर्शयति

(क्वनु इत्यादि) अश्वमेधयाजिनः क्वनुगच्छन्ति पारिक्षिताः कुत्र गच्छन्तीति प्रश्नस्याश्वमेधयाजिनो यत्र गच्छन्तीत्युत्तरं ततः पुनरपि पृष्टे यऽश्वमेधकारि एवगच्छन्ति इति भावः। उभयोः प्रश्नयोरुपशमायोत्तरयति—

**पृथिवीं द्विस्तावत्समुद्रः पर्य्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभव-**

(द्वात्रिंशतमित्यादि) देवः सवितातस्य रथो देवरथः तस्य देवरथस्य गतिक्रियया अह्नो दिवसस्य यावद्देशपरिमाणं व्याप्तं भवति तद्देवरथाह्न्यम् तस्य द्वात्रिंशतसंख्ययागुणनं क्रियते तस्यैव नाम देवरथा ह्न्यानि । अयं ताव-त्परिमाणको लोकः लोकालोकपर्वतश्रेण्या परिवृतो देशः । तमुक्तपरि-माणकं लोकं समन्तं समन्तात् द्विः द्विगणा पृथिवी पर्येति । पूर्वोक्तलोका-पेक्षया द्विगुणिता पृथिवी वर्तते इति । तांपूर्वोक्तपरिमाणावृतां महा-पृथिवीम् द्विर्द्विगुणः समुद्रो जलनिधिः पर्येति, तां पृथिवीं समन्तात् परिष्टच्य समुद्रो विद्यते यं समुद्रं शास्त्रकारा घनोदकमिति कथयन्ति तथोक्तम् "रवि-चन्द्रमसोर्यावत् मयूखैरवभास्यते । समुद्रसरिच्छैल्या तावती पृथिवी स्मृता अण्डस्यास्य समन्तात्तु संनिविष्टोऽमृतोदधिः । समन्तादघनतोयेन धार्यमाणः स तिष्ठति ॥ तत्राश्वमेधलोकमार्गस्य विवरपरिमाणं दर्शयितुमुपक्रमते—

(तद्यावतीत्यादि) तत् तत्राण्डकपाले क्षुरस्य नापितास्त्रविशेषस्य यावती यावत्प्रमाणा धारा अग्रभागो भवति । अथवा यावत्प्रमाणकं मक्षि-कायाः पत्रं पक्षो भवति । तत्सदृशमन्तरेण मध्ये आकाशः तावत्प्रमाणको भवति । क्षुरधारासदृशं मक्षिकापत्रसदृशं वा अण्डकपालमध्ये छिद्रं भवतीति भावः ।

( तानिन्द्र इत्यादि) तान् पारिक्षितान् इन्द्रोऽश्वमधेयज्ञतुष्ट इन्द्रः सुपर्णो वाहनं भूत्वा वायवे वायुदेवायै प्रायच्छत् दत्तवान् । इन्द्रवाहनो भूत्वा तमादाय वायवे दत्तवानित्यर्थः । ततो वायुरिन्द्रप्रदत्तपारिक्षितान् वायुः आत्मनि स्वस्वरूपे धृत्वा संस्थाप्य । यत्र ब्रह्मलोके अश्वमेधयाजिनोऽभवन् वसन्ति स्म तत्रैव ब्रह्मलोके पारिक्षितानगमयत् प्रापयत् । एवमिन्द्रस्यापि

**भित्येवमिव वै स वायुमेव प्रशशंस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरपपुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥२॥**

**इति बृहदारण्यकोपनिषदि तृतीयाध्याये ॥३॥**

**तृतीयं ब्राह्मणम् समाप्तम् ॥३॥**

गमनयोग्याण्डकपालछिद्रद्वारावायुः पारिक्षितान् ब्रह्मलोकं चतुर्मुखलोकमगमयति स्मेत्यर्थः । एवं यथोक्त विलक्षणकार्यसंपादकं वायुमेव वायुदेवः स दुहितृशरीराविष्टो गन्धर्वः प्रशशंस स्तुतवान् प्रशंसामकरोत् तत्राप्ये । यस्माद्वायुः चतुर्मुखलोकप्राप्यकत्वात् प्रशंसनीयस्तस्मात्कारणात् वायुरेव व्यष्टिर्वायुरेव समष्टिरूपः । पञ्चीकृत व्यष्ट्यात्मक चतुर्मुखलोक चतुर्मुखो-लोकाधोविद्यमानलोके संचरणशीलत्वेन सूत्रात्मप्राणरूपेण सर्वप्राणिनां जीवनयात्रानिर्वाहकत्वेन समष्टिव्यष्टिलक्षणो भवतीति भावः । यो हि वायुं समष्टिव्यष्टिरूपेणानुचिन्तयति तदनुचिन्तनस्य किं फलं भवतीति दर्शयितुमाह-

(अपपुनरित्यादि) य उपासक एवं समष्टिव्यष्टिलक्षणं वायुं वेद विजानाति तादृग्गुणकवायोरुपासनं करोतिस ख लूपासकः पुनरपमृत्युमकाल मृत्युं जयति तस्यापमृत्युर्न भवतीत्यर्थः । ततो याज्ञवल्क्यस्योत्तरानन्तरं गन्धर्वोक्तं सर्वमक्षरशो ज्ञात्वा तस्य ज्ञानातिशयं विजानन् उपररामोपरतो जातः नान्यत् किमप्यवशिष्टं प्रष्टव्यमभूदिति ॥२॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य

तृतीयं ब्राह्मणं समाप्तम ॥३॥

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતા જ્ઞાનકીનાથો વેદવેદ્યો મહામતિઃ॥

Rukun Jaypal

**अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्व इत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्व्वान्तरो यः प्राणेन प्राणिति**

यथोक्तप्रकारेण याज्ञवल्क्यस्य कर्मकाण्डे प्रागल्भ्यं ज्ञात्वा ज्ञानकांडे एनं पराभविष्यामीत्याशया पुनस्ते विद्वांसः प्रयत्नमकुर्वन्त ।

( अथ हैनमुषस्त इत्यादि ) तत्रोषस्तस्तन्नामकश्चक्रायणश्चक्रस्य गोत्रापत्यं चाक्रायण एनं प्रकृतं याज्ञवल्क्यं पपृच्छ पृष्टवान् । तत्र हे याज्ञवल्क्येति सबोधनेन स्वाभिमुखं कृत्वा तमुवाच–

(यत् साक्षादपरोक्षाद् ब्रह्म) तत्र अपरोक्षादित्यस्यापरोक्षमित्यर्थः सुपांसु लुक् इत्यादि सूत्रेणादादेशं कृत्वा तथा भवतीति शाब्दिकाः । तत्र सर्वदेशसर्वकालसनिहितत्वमेवापरोक्षत्वम् । यत्र देशकालयोः सम्बन्धस्तत्र प्रत्यक्षमिति व्यवहारस्य सर्वानुभवविषयत्वात् । यदपरोक्षं साक्षाद्ब्रह्म मुख्यं ब्रह्म न तु मनो ब्रह्मवद्गौणम् । सर्वान्तरः सर्वान्तर्यामी । आत्मा च द्रष्टव्यः श्रोतव्य इत्यादिना दर्शनादिक्रियाकर्मतया प्रतिपादितो यः तादृशं वस्तु मे मम व्याचक्ष्व कथय पार्थक्येन दर्शयत्वित्यर्थः । एवमुषस्तेन पृष्टो याज्ञवल्क्यः प्राह

(एष ते आत्मेत्यादि) एष मानसप्रत्यक्षविषयो यस्ते तवात्मा स एव सर्वान्तर्यामी । तदेव मुख्यं ब्रह्म श्रोतव्य इतिवत् द्रष्टव्योऽपि । पुनरपि पृच्छति ।

(कतम इत्यादि) हे याज्ञवल्क्येति संबोधनं कृत्वा पृच्छति कतम आत्मा यः सर्वान्तरः सर्वस्यान्तर्यामी यदुक्तं भवता तवात्मा सर्वान्तरः तद्भवतु नाम । परन्तु कतम आत्मेति तवाभिप्रायं न जानामि शरीरेन्द्रियप्राणमनोबुद्धिजीवेषु मध्ये एवमेकश्चिदात्मा अथवा एतद्भिन्नः कश्चिदात्मा यः सर्वान्तर इति । यद्यपि ते आत्मेति कथनादेव शरीरभिन्नत्वमात्मनः कथित-

**स त आत्मा सर्व्वान्तरो योऽपानेनापानिति स त आत्मा सर्व्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्व्वान्तरो य उदानेनोदानिति स त आत्मा सर्व्वान्तर एष त आत्मा सर्व्वान्तरः ॥१॥**

**स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व**

मेव भवति, ततश्च व्यतिरिक्तात्मविषयकः प्रश्नो नोपपद्यते। तथापि शरीरव्यतिरेकस्यात्मनि सिद्धत्वेपि इन्द्रियप्राणादिभेदो नात्मनः सिद्धो भवतीति। तेभ्यो भेदप्रतिपादनाय पुनः प्रश्नस्यावश्यकत्वादिति प्रश्नः। एवमुषस्तस्य प्रश्नं श्रुत्वोत्तरयितुमाह याज्ञवल्क्यः—

(यः प्राणेनेत्यादि) यो हि व्यक्तिविशेषः प्राणेन प्राणात्मककरणमुपादाय प्राणिति प्राणनक्रियां सम्पादयति स ते आत्मा सर्वान्तरः। प्राणादिव्यापारकर्ता यः स सर्वान्तर आत्मेत्यर्थः। अत्र प्राणः करणम् ततश्च करणात् कर्ता भिन्नो भवतीति नियमः यथा छिदिक्रियायां करणं वास्यादिकं तत् छेदनक्रियाकर्तुः कर्मकाराद्भिन्नं प्रतीयते तद्वदिहापि प्राणस्य प्राणनक्रियां कारणत्वात् कर्त्ता ततो भिन्न एव ततश्च प्राणादात्मा भिन्नः सिद्धो भवति। तथा सुषुप्तिसमये बाह्याभ्यन्तरसर्वेन्द्रियाणामुपरमेऽपि प्राणनादिक्रियाया दर्शनादवश्यप्राणादिभिन्नत्वमात्मनः सिद्धं भवति। तथा सुषुप्तिसमये जीवोऽप्युपरतव्यापारो भवति प्राणनक्रिया तु तदापि भवति ततो जीवव्यत्तिरिक्तित्वमपि सर्वान्तरस्य सिद्धयति। एवं योऽपानेनापानिति स ते आत्मा सर्वान्तरः। एवमुदानेनेत्यादिकं व्याख्येयम्। उपसंहरति एष ते आत्मा सर्वान्तर इति ॥१॥

एवं याज्ञवल्क्येन सर्वान्तरात्मनः प्रतिपादनेऽपि तदभिप्रायमजानन् पुनः पृच्छति स उषस्तश्चाक्रायणः पुनरप्युवाचेति। किमुवाच तत्राह— यथा विब्रूयादसावित्यादि, यथा येन प्रकारेण कश्चिद् विब्रूयात् वदेत् असौ

**इत्येवमेवं तदव्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्व्वान्तरः कतमो याज्ञवल्क्य सर्व्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्न**

गौरसावश्वः तत्र गवाश्वयोरभेदो विरुद्धः । एवमेव भवद्वचनं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर इति गवाश्वयोरभेदवदिदं भवद्वचनमप्यप्रामाणिकमेवातो य आत्मा सर्वान्तरः तन्मे व्याचक्ष्व विशेषतः प्रतिपादनं कृत्वा कथयेति । एष ते आत्मा सर्वान्तरः यः प्राणेन प्राणिति इति प्राणनादिक्रियाकर्तुर्जीवस्य सर्वान्तरत्वकथनं विरुद्धवचनमेव भवति भवतः । अतः कतमो याज्ञवल्क्य सर्वान्तरः स अविरुद्धतया तावद्वक्तव्य इति । एतस्योत्तरमाह—

(न दृष्टेरित्यादि) दृष्टेर्द्रष्टारं न पश्येः श्रुतेः श्रोतारं न शृणुयाः विज्ञातेर्विज्ञातारं न मन्वीथाः अत्र दृष्टेर्द्रष्टारमित्यादिषु पाकं पचति वदेव निर्देशो ज्ञातव्यः । दृष्टेर्द्रष्टारं कर्तारं न पश्ये इत्यर्थः । एवं सर्वत्र योज्यम् । दर्शनादिक्रियासु कर्ता यो जीवः स न द्रष्टव्यो न वा श्रोतव्यः किन्तु तदतिरिक्त एव द्रष्टव्यः श्रोतव्यः स सर्वान्तर्यामी । यदि जीवो न द्रष्टव्यस्तदा को द्रष्टव्यस्तत्राह—

(एष ते आत्मेत्यादि) एष ते आत्मा सर्वान्तरः दर्शनादिक्रियासु यः कर्ता जीवः ततो भिन्न एव कश्चित् दर्शनक्रियायाः कर्म स दर्शनादिक्रियाकर्मीभूत इति ।

(अत इत्यादि) अतः सर्वान्तर परमात्मतोऽन्यद् व्यतिरिक्तं यद्भवदभिमतप्राणनक्रियाकर्तृजीवादि वस्तु तत् सर्वमार्तम् दुःखविशिष्टम्, तन्न दर्शनक्रियाकर्म । यद्यपि नित्यमुक्तानां कदापि दुःखस्पर्शाभावात् अतोऽन्यदार्तमिति कथनममुक्तमिति तथापि नित्यमुक्तानामिहाप्र-

मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्व्वान्तरोऽतोऽन्यदार्त्तं ततो होषस्तश्चाक्रायण उपरराम ॥२॥

इति बृहदारण्यकोपनिषदि तृतीयध्यायस्य ॥३॥

चतुर्थं ब्राह्मणम् ॥४॥

अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तरस्तं मे व्याचक्ष्वेत्येष

सत्करिति। एवमुक्ते याज्ञवल्क्ये उषस्तश्चाक्रायणः उपररामोपरतो जात इति ॥२॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
चतुर्थं ब्राह्मणं समाप्तम् ॥४॥

एवमुपरते उषस्ते कहोलनामको ऋषिरात्मान्वेषणबुद्ध्या याज्ञवल्क्यं प्रत्युवाचेति दर्शयितुं कहोलब्राह्मणमुपक्रमते—

(अथैनं कहोल इत्यादि) कहोलो नामतः कौषीतकेयः कुषीतकस्यापत्यम् एनं याज्ञवल्क्यमुषस्तव्यापारोपरमानन्तरं पप्रच्छ पृष्टवान्–हे याज्ञवल्क्येति संबोध्योवाच कहोलः। किमुवाच कहोलस्तत्राह—

(यदेवेत्यादि) यदेव साक्षान्मुख्यमपरोक्षादपरोक्षं देशकालसन्निहितम् ब्रह्मात्मा सर्वान्तरः सर्वदेहेन्द्रियाद्यपेक्षया। अन्तरस्तमात्मनं तत्स्वरूपं मे मह्यं व्याचक्ष्व विशेषतः प्रतिपादय। उत्तरयति—

एष ते आत्मा सर्वान्तरः पुनः प्रश्नयति—

(हे याज्ञवल्क्य! कतमः सः यः सर्वान्तर इति) यद्यपि प्रश्नोऽयमुषस्तब्राह्मणेन कृत एव। उत्तरमपि दत्तवान्। परमेश्वरस्य स्वाभाविकाशेषप्राण-

**त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैष-**

भृत् प्राणनादिक्रियासम्पादकत्वात् निरपेक्षसर्वान्तरत्वात् जीवतो भेदोऽपि सिद्ध एव । तथा न दृष्टेर्द्रष्टारं पश्येरित्यादिना दर्शनश्रवणमननादिकर्तुः जीवस्य दर्शनादिकर्मत्वाऽऽदिप्रतिषेधद्वारेण मुख्यब्रह्मतायाः अपि निराकरणं कृतमेव । तथापि जाग्रदादिसमये जीवेऽपि प्राणितृत्वसंभवात् तथा शरीराद्यपेक्षया जीवस्यापि आपेक्षिकसर्वान्तरत्वसंभवात् न दृष्टेर्द्रष्टारं पश्येरित्यत्रापि दृष्टिरज्ञानाभिन्नद्रष्टृत्व निषेधपरत्वसंभवेन ज्ञानलक्षणजीवप्रतिपादनसंभवात् । एते धर्मा एकान्ततः परमात्मनि सन्तीति निश्चयकरणं न सम्भवति कहोलस्य दृढतरव्यावर्तकधर्मद्वारा जीव-व्यावर्तकधर्मस्याविश्यतया भेदबुद्ध्यर्थमेकविषयकमेव प्रश्नद्वयमत्र ज्ञातव्यम् । पूर्वमपि परमात्मविषयक एव प्रश्नः इहापि तद्विषयक एवेति । कहोलस्याभिप्रायं ज्ञात्वा प्राह–

( योऽशनायेत्यादि ) यः परमात्मा अशनापिपासे तत्राशितुं भोक्तुमिच्छा अशना या बुभुक्षा तथा पातुमिच्छा पिपासा एतदुभयमत्येति अशनापिपासाभ्यां रहितः तथा शोकम् शोको नाम इष्टाप्राप्त्यनिष्टापरि-हारजन्यो जीवधर्मविशेषोऽन्तः करणधर्मो वा तं तथा मोहः कामादिजनितः । अथवा मोहोऽज्ञानम् जरां वार्द्धक्यम् मृत्युं चरमोच्छ्वासनिवृत्तिलक्षणम् जन्मदुःखादेरप्युपलक्षकम् । एतत्सर्वं योऽत्येति अतिक्रम्य वर्तते स परमात्मा । न जीव एतादृशः कर्माधीनत्वेनैतत् अशनाद्यनतीतत्वादिति जीवव्यतिरेकः सिद्ध्यतीति । यद्यपि नित्यमुक्तानां नित्यमशनायाद्यतीतत्वं

**णोभे ह्येते एषणे एव भवतस्तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च**

विद्यते तथापि नित्यमुक्तानामशनायाद्यतीतत्वात् परमात्मसंकल्पाधीनम् इति अनन्यसंकल्पाधीनाशनायाद्यतीतत्वं स्वभावतः परमात्मन एवेति ।

(एतं वै इत्यादि) तमेतं सर्वान्तरमशनायादिसर्वसंसारधर्मरहितमात्मानं परमात्मानं स्वभावतः सर्वदुःखरहितं विदित्वा तदुपासनां कृत्वेत्यर्थः ब्राह्मणा जात्या ब्राह्मणा एतावता क्षत्रियादिब्राह्मणाभिन्नानामत्रानधिकारः प्रदर्शितः । पुत्रैषणायाः पुत्रविषयकेच्छातः पुत्रैषणेत्यनेन जाया मे स्यादथ प्रजायेय इत्यैषणा कथिता सेह गृहीता भवति । एवं वित्तैषणाया गवादिधनविषयकेच्छातः, "वित्तं मे स्यादथ कर्म कुर्वीय" इत्यनेन या पूर्वकथिता सेह परिगृह्यते वित्तैषणेत्यनेन । तथा लोकैषणायाः अत्र लोकैषणेत्यनेन स्त्रीपुत्रवित्तकर्मसाध्यसकललोकविषयकेच्छा परिगृहीता भवति । एवं च यथोक्तैषणात्रयात् व्युत्थाय व्युत्थानं कृत्वा एषणात्रयं परित्यज्य सविधि सन्यासं न्यासं गृहीत्वेति यावत् । अथैषणात्रयपरित्यागानन्तरं भिक्षाचर्यं भिक्षावृत्तिं देहयात्रानिर्वाहाय चरन्ति कुर्वन्ति । एतावता पारिव्राज्यस्य विधानं भवतीति ।

(या ह्येवेत्यादि) आसां सर्वासामेषणानां नियतपरस्परसम्बन्धात् एकरूपैव प्रतिभातीति ।

( उभे ह्येते इत्यादि ) यद्यपि एषणात्रयमत्र प्रदर्शितं संक्षेपात् साध्यसाधनलक्षणमेषणाद्वयमेव भवति अनयोरेव सर्वस्या अन्तर्गतत्वादिति ।

(तस्मादित्यादि) यस्मा संन्यासप्रयोजकं वैराग्यं स्त्रीपुत्रादिसांसारिकवि

**मौनञ्च निर्विद्याऽथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्त्तं ततोह कहोलाः कौषीतकेय उपरराम ॥१॥**

## इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

आवश्यकं तस्मात् कारणात ब्राह्मणोऽधीतस्वाध्यायः तत्र वेदात्मकब्रह्माधीते इति ब्राह्मणो ब्राह्मणत्वजातिविशिष्टो वा पाण्डित्यं निर्विद्य प्राप्य । तत्रोहापोह समर्था बुद्धिः पण्डा सा संजाता यस्य स पण्डितः तस्य भावः पाण्डित्यम् औपदेशिकार्थावगमलक्षणं विवेकं निर्वेदं विरक्तिफलकं निर्विद्य प्राप्य बाल्येन-बालस्वभावेन युक्तः सन् तिष्ठासेत् ब्रह्मणि स्थितो भवेत ब्रह्मनिष्ठां लभेत तदुपासनं कुर्यादित्यर्थः । यथा बालो रागद्वेषादिरहितः स्वमाहात्म्यं नाख्यायति तद्वद्भूत्वा ब्रह्मोपासनापरायणो भवेदिति भावः । बाल्यं पांडित्यं च लब्ध्वा अथ मुनिः ध्येयैकसंशीलनलक्षणमननशीलो भवेत । व्युत्थानसमये तु विषयान् मनसः पराङ्मुखत्वाय शुभालंबनं हरिमूर्त्यादि-वस्तुसंशीलनं कुर्यादिति

(अमौनं मौनं चेत्यादि) अमौनं मौनाद्भिन्नं बाल्यं पांडित्यं तथा मौनमालंबनं संशीललक्षणं निर्विद्य संप्राप्याथ तदनन्तर ब्राह्मणो ब्रह्मविद्भवति संप्राप्तनिदिध्यासनो भवतीत्यर्थः ।

(स ब्राह्मण इत्यादि) स ब्राह्मणो ब्रह्मवित् उक्तोपायातिरिक्तेन केनोपायेन स्यादिति प्रश्नः । उत्तरयति—

( येन स्यादित्यादि ) येनेदृशः स्यात्तेनेदृश एव अर्थात् मौन-पर्यन्तकारणेनैवेदृशो ब्रह्मवित् स्यात् न तु प्रकारान्तरेण ब्रह्मवित् सम्भवति, यदि भवेत् तदा अनेन मौनपर्यन्तकारणेनैवेति । अतोऽन्यदार्तम । अतोऽन्-

शयितसामर्थ्ययुतात् परमेश्वरात् यदन्यद्भिन्नं प्राणिजातं तत्सर्वमार्तं दुःखमित्यर्थः ततस्तदनन्तरं याज्ञवल्क्यवचनमवधार्य्य कहोलः कौषीतकेय उपरराम । जल्पकथात् उपरतोऽभवत् । प्रष्टव्यान्तराभावादिति ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
पंचमं ब्राह्मणं समाप्तम् ॥५॥

---

## अथ तृतीयाध्याये षष्ठं ब्राह्मणम्

**अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदं सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति**

(अथेत्यादि) अथ कहोलोपरमानन्तरं एनं प्रकृतं याज्ञवल्क्यं गार्गी गर्गस्य गोत्रापत्यं स्त्री गार्गी वाचक्नवी वचक्नु ऋषेः पुत्री पप्रच्छ पृष्टवती । हे याज्ञवल्क्येति सम्बोधनं कृत्वा सा उवाच तं प्रति किमुवाच तत्राह–

(यदिदमित्यादि) यदिदं पार्थिवं पृथिवीविकारभूतं सर्वं धातुजातं अप्सु जलेषु ओत प्रोतं दीर्घपटतन्तुवत् ओतं तिर्यक् तन्तुवत् प्रोतं च पृथिव्याः कारणे जलं ततश्च कार्यकारणेनोतं च प्रोतं च भवति । जलेषु ओतत्वाभावे सर्वं पार्थिवं वस्तु सिकतावद् विशीर्येत । ताः पृथिवीकारणात्मिका आपः कस्मिन् ओताः प्रोताश्चेति प्रश्नः उत्तरयति–

**गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति**

( वायाविति ) वायुरन्तरिक्षलोके, स च गन्धर्वलोकेष्वोतश्च प्रोतश्चेत्यादि क्रमेण व्याख्येयः । ननु गन्धर्वलोकोऽन्तरिक्षापेक्षयोपरि विद्यतेऽन्तरिक्षलोकश्चाधः तदा कथमन्तरिक्षलोक उपरितन गन्धर्वलोके ओतः प्रोतः उपरितनो घटः स्वापेक्षया अधस्तने स्वाधारे स्थितो भवति न तु पृथिव्यादिर्घटादौ भवति तथा यत्राधारं घृतंघृताधारं पात्रमिति न्यायविषयतां नातिक्रामति इति चेन्न वस्तुस्वभाववैलक्षण्यात् । अयं भावः सत्यमाधारे आधेयस्य व्यवस्थानं घटादौ भवति दृष्टं परंतु यथा पर्वता अत्युच्छ्रिता उपरितना अपि अधः स्थिता या अपि पृथिव्या धारका भवन्ति तथैवोपरिवर्तमानोऽपि गन्धर्वलोकोऽधः स्थितस्यान्तरिक्षलोकस्य व्यवस्थापकोऽभवत् । तत्रोपरिवर्तमानगन्धर्वलोकोऽधः स्थितान्तरिक्षलोकस्योतत्वप्रोतत्वसम्भवात् । यथा वा सर्वत उपरिविद्यमानमपि ज्योतिश्चक्रं सर्वस्योर्ध्वाधो व्यवस्थितस्य धारक तथैवात्रापि भविष्यतीति का क्षतिर्न कापि क्षतिरिति भावः । प्रजापतिलोकान्तलोकाः कुत्रोताः प्रोताश्चेति प्रश्नस्य प्रतिवचने ब्रह्मलोके ओताः प्रोता इत्युत्तरम् । ततः पुनरपि पृच्छति गार्गी हे याज्ञवल्क्य ! अयं ब्रह्मलोकः कस्मिन् ओतश्च प्रोतश्चार्थात् तदाधारः क एव प्रश्नं श्रुत्वा सह याज्ञवल्क्य उवाच– हे गार्गि माति प्राक्षीः अतिप्रश्नं मा कुरु अन्यथा ते तव मूर्धा व्यपतत तव शिरो देहात् पतितं भवेत् ।

कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माऽतिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यां वै देवताम तिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नवी उपरराम ॥१॥

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य
षष्ठं ब्राह्मणम् ॥६॥

अतोऽतिप्रश्नंकुरु अनतिप्रश्नयोग्यां देवतामनि पृच्छसि त्वं गार्गि! माति प्राक्षीः नायं प्रश्नः ते युक्तः। तत्र प्रश्नमर्हति या सा प्रश्न्या प्रश्नयोग्या। तथा नियमादिसंवलितप्रश्नमर्यादामतिक्रम्य वर्तमानः प्रश्नोऽतिप्रश्नः आक्षेप इत्यर्थः अतिप्रश्नमर्हतीत्यतिप्रश्न्या। आक्षेपयोग्या। एतादृशी न भवतीत्यनतिप्रश्न्या ततश्चाक्षेपद्वारा ज्ञातुमयोग्यां परमदेवताम् आक्षेपपूर्वकं त्वं ज्ञातुमिच्छसीत्यर्थः। प्रश्नानर्हे वस्तुनि प्रश्नो निरर्थक इति भावः। यद्यपि ब्रह्मलोकस्याधारभूतः प्रकृतेऽव्याकृताकाशः स च न प्रश्नानर्हस्तस्यापि प्रश्नसंभवात्। तदाधारः परमात्मेति तदनन्तरविषयः प्रश्नः परमदेवताविषयो भवतीति दूरदृष्ट्या ब्रह्मलोकाधारप्रश्नमेव निराकारेदाचार्य इति–

(ततो हेत्यादि) ततः तदन्तरं वाचक्नवी गार्गी उपरराम जल्पकथात उपरताभूदिति ॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
षष्ठं ब्राह्मणम् समाप्तम् ॥६॥

## तृतीयाध्याये सप्तमं ब्राह्मणम्

**अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि**

(अथेत्यादि) अथोपरतायां गार्ग्याम् एनं प्रकृतं याज्ञवल्क्यम् । आरुणिररुणस्यापत्यं पुमान्नामोद्दालको ऋषिरमानुषात्प्राप्तसूत्रविद्यः पराभवनेच्छया पप्रच्छ पृष्टवान् । किमपृच्छत् तत्राह–

(याज्ञवल्क्येतीत्यादि) हे याज्ञवल्क्येति संबोधनेन स्वाभिमुखं कृत्वोवाचोक्तवान् । किमुक्तवान् तत्राह–

(मद्रेष्वित्यादि) मद्रेषु विद्वद्बहुलतया प्रसिद्धेषु देशविशेषेषु नामतः पतंजलस्य गोत्रतः काप्यस्य गृहेषु आगारेषु गृहेष्वित्यत्र बहुवचनं "गृहाः पुंसि च भूम्न्येवेत्यनुशासनात् । अथवा गुरुगृहत्वेनादरं ख्यापयितुं बहुवचनम् । तद्गृहे यज्ञं यज्ञप्रक्रियाबहुलं सूत्रं कल्पसूत्रमित्यर्थः अधीयानाः पठन्तोऽवसाम तत्रोषितवन्तः एतावता किमभूत्तत्राह–

(तस्येत्यादि) तस्य पतंजलस्य मम गुरोर्भार्या धर्मपत्नी गन्धर्वगृहीता अमानुषेण केनचित् सत्वेन गृहीता आविष्टा आसीत् अभवत् । तं शरीराविष्टं गन्धर्वं कौतूहलात् वयमपृच्छाम पृष्टवन्तः कोऽसि त्वम् ? एवं पृष्टः सोऽब्रवीत् गन्धर्वः प्रोवाच–अहं नाम्ना कबन्धः अथर्वऋषेः पुत्र इति । स कबन्धोऽब्रवीत् उक्तवान् याज्ञिकान् यज्ञाध्येतॄन् अस्मान् अध्यापकं काप्यं पतंजलं चोवाचो तत्राह–

सन्हब्धानि भवन्तीति सोऽब्रवीत्पतञ्जलः काप्यो नाहं तद्भगवन्वेदेति सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्जलः काप्यो नाहं तं भगवन्वेदेति सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च यो वै तत्काप्य सूत्रं विद्या-

(वेत्थ नु इत्यादि) हे काप्यर्षे सूत्रं तत् त्वं वेत्थ विजानासि। येन सूत्रेणायं भूरादिलोकः परः सत्यप्रभृतिको लोकः तथा सर्वाणि भूतानि जडचेतनानि सर्वाणीत्यर्थः संहत्यानि विष्टब्धानि ग्रथितानीति यावत्। यथा लौकिकेन तन्तुमयेन सूत्रेण पुष्पनिकराणि ग्रथितानि मालेति शब्देन व्यवहृतानि भवन्ति तथैव येन सूत्रेण ग्रथिता इमे लोकादिपदवाच्या भवन्ति। यदभावे विधारकाभावे पुष्पाणि वेतस्ततः विकीर्यमाणानीव भवन्ति एतादृशं सूत्रं त्वं जानासि किमिति प्रश्नः। एवं गन्धर्ववचनं श्रुत्वा अस्माकं तु कथैव का गुरुः काप्यः पतंजलोऽप्यब्रवीत्– हे भगवन्पूजार्ह ! नाह तत्सूत्र वेद विजानामि यत्त्वया पृष्टम्। एवं सूत्रविषयकं प्रश्नं पृष्ट्वा तद्विषयकाज्ञानं तेषां समवगत्य पुनरपि अन्तर्यामिणं प्रष्टुमुपक्रमन् आह–

(सोऽब्रवीदित्यादि) स शरीराविष्टः कबन्धगन्धर्वः पतंजलं काप्यं याज्ञिकान् यज्ञाध्येतॄनस्मांश्चाब्रवीदुक्तवान्– हे काप्य ! तमन्तर्यामिणं वेत्थ विजानासि। यो हि अन्तर्यामीमं लोकं परलोकं सर्वाणि भूतानि चेतनजातानि अन्तरो यमयति अन्तः प्रविश्य तदुपरि शासनं नियमनं करोति इति प्रश्नः ततः स काप्यः पतंजलोऽब्रवीत्– हे भगवन् ! अमानुष ! तमन्तर्यामिणं भगवदुक्तं सर्वेषां नियामकं नाहं वेद न विजानामि, पुनरपि गन्धर्वोऽब्रवीत् काप्यं याज्ञिकांश्च प्रति हे काप्य ! तत्सूत्रं येन सर्वो लोकः संदृब्धः तं तथा अन्तर्यामिणं विद्यात् जानीयात्। स ब्रह्मवित् परब्रह्मणो

**तञ्चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्व्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तञ्चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तञ्चान्तर्यामिणमिति यो वा इदं कश्चिद् ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥१॥**

वेत्ता तथा परब्रह्मनियम्य लोकदेवसर्वभूतवित् एतेषां ज्ञातेत्यर्थः । स परमात्मवित् परमात्मज्ञानवान् किं बहुना स सर्ववित् सर्वविषयकयथार्थ-ज्ञानवानपि भवतीति । तदनन्तरं काप्यस्य तदीयशिष्याणां च सूत्रान्तर्यामि-विषयकमज्ञानमवगत्य स गन्धर्वः कृपया सूत्रस्वरूपमन्तर्यामिणः स्वरूपं च । तेभ्यः काप्य याज्ञिकेभ्यश्च स गन्धर्वोऽब्रवीत् । तदहं वेद गन्धर्वोक्तं सूत्रान्तर्यामिणः स्वरूपं तदुक्तं सर्वमेवाहं विजानामीत्यर्थः । हे याज्ञवल्क्य ! त्वं यदि तत् सूत्रमन्तर्यामिणं चाविद्वान् तद्विषयकज्ञानरहितः सन् इमा ब्रह्मगवीः ब्रह्मविद्यापणभूता सहस्रगाः उदजसे चेत् स्वगृहं प्रति नेष्यते चेत् तदा ते तव याज्ञवल्क्यमूर्धा शिरः व्यपतिष्यति कबन्धात् शिरः पृथक्भूतं भविष्यति मरिष्यसीति यावत् । एवं रूपेण स ब्राह्मण ईर्ष्याविशात् याज्ञवल्क्यं शशापेति । ततो याज्ञवल्क्यः प्राह हे गौतम ! अहं तत् सूत्रं येन सर्वलोको ग्रथित इव विद्यते तं चान्तर्यामिणं येन पृथिवीप्रभृतिकः सर्वोऽपि नियम्यो भवति तथा-विधं सूत्रमन्तर्यामिणं च वेद विजानामि । अतस्त्वदीयः शापोऽस्थाने एवावश्यमेता गाः ब्रह्मविद्यापणभूता मत्शिष्यैर्नेतव्या इति । एवं याज्ञवल्क्ये-नोक्त उद्दालकः पुनरप्याह—

(यो वा इदमित्यादि) यो वा कश्चित्सर्वज्ञाभिमानी ब्रूयात् वदेत् । यदहं सूत्रादिकं विजानामि स सर्वज्ञाभिमानी वचनेन तं प्रतिपादयेत्—

(यथेत्यादि) यथा येन प्रकारेण वेत्थ विजानासि तथा तेन प्रकारेण ब्रूहि प्रतिपादयेति ॥१॥

**स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्त्रंसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ।।२।।**

एवं साधिक्षेपमुद्दालकस्य वचनं श्रुत्वा स याज्ञवल्क्य उद्दालकं प्रत्युवाच । हे गौतम ! वायुर्वै वायुदेवतासूत्रं यत्त्वया पृष्टं तत्र वायौ सूत्रलक्षणं योजयितुमाह–

(वायुनेत्यादि) हे गौतम ! वायुना सूत्रेणायं लोकः परिदृश्यमानो लोकः परः प्रत्यक्षाविषयः स्वर्गादिलोकः सर्वाणि भूतानि प्राणिजातानि संदृब्धानि ग्रथितानि धृतानीति भवन्ति । यस्मात् कारणात् सर्वाणि वायुनैव धृतानि ग्रथितानि तस्मात्कारणात् हे गौतम ! प्रेतं मृतं पुरुषं प्राणिजातं लोका एवमाहुः कथयन्ति । अस्य मृतस्य हस्तादीन्यंगानि व्यस्त्रंसिषत । इतस्ततः स्रस्तानि भवन्ति इत्यतो हे गौतम ! वायुना सूत्रेणैव सर्वाणि संदृब्धानि ग्रथितानीत्यर्थः यतो मृतस्योत्क्रान्तप्राणस्यांगानि उत्सूत्रमाल्यानीव स्रस्तानि भवन्ति, ततो वायुरेव सूत्रभूतो येन सर्वाणि ग्रथितानीति वायुरेव सूत्रमिति भावः । याज्ञवल्क्योक्तं सर्वमंगीकुर्वन्नाह–

(एवमेवेत्यादि) हे याज्ञवल्क्य ! एवमेवैतत् सूत्रविषये यद्भवता कथितं तत् गन्धर्वभाषितमेवेति सर्वमेव सत्यं भवदुक्तम् । एवं प्रश्नान्तरस्यापि उत्तरं देहीत्याशयेनाह–

(अन्तर्यामिणं ब्रूहीति) अन्तर्यामी कः किंच तस्य स्वरूपमिति ब्रूहि कथयेत्यर्थः ।।२।।

**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य**

अन्तर्यामिणं दर्शयितुमाह–

(यः पृथिव्यामित्यादि) अत्रान्तर्यामिपदेन परमात्मन एव ग्रहणम्। न तु जीवस्य परमात्मन्येव प्रकरणस्वारस्यात्। यः परमात्मा पृथिव्यां तिष्ठन् पृथिव्यां स्थितः पृथिव्यन्तर्गत इत्यर्थः, पृथिव्या अन्तरो बहिरपि व्यापकत्वात्। पृथिव्या अन्तरे विद्यमानोऽपि यं परमात्मानं पृथिवी पृथिव्यभिमानिदेवो न वेद न विजानाति तं स्वरूपेण। यस्य परमात्मनः पृथिवी शरीरं पृथिवी यस्यावयवभूता तथा यः पृथिवीमन्तरो यमयति प्रवृत्तिनिवृत्तिकार्ये पृथिव्या नियमनं करोति। एष उपर्युक्तगुणविशिष्टः ते तव आत्मा तवाधारभूतः स एवान्तर्यामी स चामृतः निरतिशयामृतत्वयुक्तः पृथिव्यन्तरर्गतः पृथिव्यवेद्यः पृथिवीशरीरकः सन् यः पृथिव्या अन्तः प्रविश्य प्रवृत्तिनिवृत्तिलक्षणं नियमनं सम्पादयति एषोऽन्तर्यामी तवामृत आत्मा निरतिशयामृतत्वयुक्त आत्मेत्यर्थः। अत्र ते आत्मेतीत्यत्र कथनेन षष्ठीविभक्तिनिर्देशात् षष्ठ्याश्च भेदघटितत्वेनान्तर्यामिणः सकाशात् जीवस्य भेदः सिद्धः देवदत्तस्य धनमितिवत्। तथा अमृतत्वेति विशेषणादपि जीवान्तर्यामिणोभेद एव। यद्यपि ते आत्मेति कथने आत्मशब्दस्य स्वरूपवचनत्वशंकया जीवव्यावृत्तिर्न स्यात् तथापि अमृत इति विशेषणं जीवादन्तर्यामिणोर्भेदं साधयति, न हि निरुपाधिकामृतत्वशालित्वं जीवस्य किन्तु परमात्मन एवात आत्मेत्यस्य परमात्मेत्यर्थः। ततश्च परमात्मैवात्र प्रकरणे न्तर्यामिति। यद्यपि जीवस्यापि परमात्मावयवत्वेनावयावयविनोरभेदात् अमृतत्वं तत्रापि इति तद्विशेषणात्तद्व्यावृत्तिर्न भवति, तथापि अतोन्यदार्तमीतिकथने न स्वरूपतो जीवस्य दुःखवत्त्वश्रवणेन निरुपाधिकनिरतिशयामृतत्वाभावात्। तादृशामृतत्वं तु परमात्मन्येवेति परमात्मैवान्तर्यामीति। अत्र प्रश्नानुरूप्येण। इमं च लोकं परं च लोकं सर्वाणि च भूतानि योन्तरो यमयति

**पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥३॥**

**योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं**

एष ते आत्मान्तर्यामीत्येकस्मादेव निर्देशात् सर्वान्तर्यामिणं आरुणिं प्रति ते आत्मेत्यात्मप्रतिपादनसंभवेन यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन्नित्यादिक्रमेण बहुवारमुपदेशो निरर्थक इवाभातीति चेत्सत्यम् ? प्रत्येकस्मिन्वस्तुनि परिपूर्णरूपत्वेन नियन्तृतया परमात्मनः स्थितिज्ञापनायानेकवारोपदेशस्य सार्थक्यसंभवादिति । तत्र परिपूर्णत्वमणुमात्रेपि पदार्थे वर्तमानस्य निरवधिकषाड्गुण्यविषिष्टप्रतिपत्तियोग्यत्वमेवेति अन्यत्र वर्णितमित्ति । अथ सर्वाणि भूतानि योन्तरो यमयति तन्मे ब्रूहीति सर्वभूतस्यान्तर्यामी एकोऽस्ति स त्वया वक्तव्य इत्युक्तवन्तं प्रति पृथिव्यन्तर्यामी एव तवान्तर्यामीजलान्तर्याम्येव तवान्तर्यामीति पृथिव्यन्तर्यामिणश्चोद्दालकान्तर्यामिणश्चाभेदप्रतिपादनमयुक्तिमिति पृथिव्याद्यान्तर्याम्यैकत्वस्य पूर्वमेव निश्चितत्वात् । तस्मात्स ते आत्मेत्यत्रात्मशब्दोनान्तर्यामिबोधकोऽपितु स्वरूपबोधक इति चेन्न । आत्मशब्दस्य शेषित्वाद्याधारत्वाद्यर्थकत्वेनाप्युपपत्तिसम्भवात् । पतिं विश्वस्येत्यादि वचनेन विश्वशेषिणः कस्यचिदवगतत्वेन तेन वाक्येनावगतस्ते आत्मा ते शेषी पृथिव्यादीनान्तर्यामीति प्रकरणार्थः सिद्ध्यतीति ॥३॥

(योप्सुतिष्ठन्नित्यादि) यो हि जले विद्यमानो यं जलं न जानाति, यो जलमन्तर्यमयति स ते आत्मान्तर्याम्यमृत इत्यादि क्रमेण चतुर्थमंत्रादारभ्य चतुर्दशमन्त्रपर्यन्तमन्त्राणां व्याख्यानं स्वयमेवोहनीयम् । केवलं चतुर्दशमन्त्रान्ते इत्यधिदैवतमित्यस्याभिदैवतमन्तर्यामिस्वरूपमुपदिष्टं भवतीत्यर्थो ज्ञेयः । तथा अधिदैवतमधिदैवतमन्तर्यामिस्वरूपमग्रे प्रदर्श्यते इत्यर्थः । द्वात्रिंशतिमंत्रे यो विज्ञाने तिष्ठन्नित्यत्र विज्ञानपदं जीवात्मबोधकं तथा च यो विज्ञाने जीवात्मनि स्थित इत्यादि क्रमेणार्थो ज्ञातव्यः । यद्यपि विज्ञानमय

योऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥४॥

योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥५॥

योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षं शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥६॥

यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः ॥७॥

यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्मातर्य्याम्यमृतः ॥८॥

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः ॥९॥

यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१०॥

यश्चन्द्रतारके तिष्ठंश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥११॥

य आकाशे निष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१२॥

यस्तमसि तिष्ठंस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं

यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१३॥

यस्तेजसि तिष्ठं स्तेजसोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतामथाधिभूतम् ॥१४॥

य सर्व्वेषु भूतेषु तिष्ठन सर्व्वेभ्यो भूतेभ्योऽन्तरो यं सर्व्वाणि भूतानि न विदुर्यस्य सर्व्वाणि भूतानि शरीरं यः सर्व्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ॥१५॥

यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१६॥

यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१७॥

यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१८॥

यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यं श्रोत्रं न वेद यस्य श्रोत्रं शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१९॥

यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२०॥

यस्त्वचि तिष्ठंस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२१॥

इत्यादिदर्शनात् विज्ञानपदं बुद्धिपरकं तथापि माध्यन्दिनशाखायां विज्ञानपदस्थाने य आत्मनि तिष्ठन्नित्यात्मशब्देन जीवस्यैव निर्देशदर्शनात्,

**यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्या-यमृतः ॥२२॥'**

**यो रेतसि तिष्ठन् रेतसोऽन्तरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतोऽदृष्टो**

इह हि विज्ञानपदमात्मपरकमेवेति ॥४--२२॥

(यो रेतसि तिष्ठन्नित्यादि) यो रेतसि तिष्ठन् वर्तमानः रेतसोऽन्तरो मध्यवर्ती यं परमात्मानं रेतो न वेद न विजानाति । यस्य च परमात्मनो रेतः शरीरम् । यो रेतोऽन्तरो यमयति तं नियमयति एष ईदृशस्ते आत्माऽमृतो निरुपाधिकामृतत्वगुणविशिष्टोऽन्तर्यामी स पुनरदृष्टो द्रष्टा । तत्र द्रष्टृत्वं नामरूपसाक्षात्कारवत्त्व न तु चक्षुर्जन्यज्ञानाधिकरणत्वम् । परमेश्वरे चक्षुरादीनामभावात् तादृश ज्ञानवत्त्वानुपपत्तेः "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । न तस्य वेद्यं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तमित्यादि श्रुत्यन्तरे परमेश्वरस्य चक्षुराद्यभावप्रतिपादनात् । तथाऽश्रुतः श्रोता इहापि श्रोतृत्वं शब्दसाक्षात्कारवत्त्वम् । अमतो मन्ता-मन्तृत्वं मन्तव्यविषयविषयकं साक्षात्कर्तृत्व अविज्ञातो विज्ञाता । विज्ञातृत्वं नाम विज्ञानपदबोध्यनिदिध्यासनविषयसाक्षात्कर्तृत्वम् । यद्यपि द्रष्ट्रत्वादिकं जीवस्यापि विद्यते, जीवो हि घटादिकसांसारिकपदार्थं पश्यति, तथापि द्रष्ट्रत्वमद्रष्टृत्वविशेषणेन योजितम् । एतादृशं च द्रष्टृत्वं परमात्मन्येव विद्यते न तु जीवस्य तदस्तीति । नाऽन्योतोऽस्तीति । अतः परमात्मनोऽन्यः परमात्मभिन्नः परमात्मसदृशो द्रष्टा नास्ति । सर्वनाम्नोऽन्य-शब्दस्य तद्भिन्नतत्सदृशबोधकत्वेन समाने पूर्ववत्वादिति सूत्रे पाणिनीये विचारितत्वात् । अतोऽदृष्टत्वादिविशेषितनिरुपाधिकरूपादिसाक्षात्कारा-

द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योतोऽस्ति द्रष्टा नान्योऽतोस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्त्तं ततो होद्दालक आरुणि-रुपरराम ॥२३॥

इति बृहदारन्यकोपनिषदि तृतीयोध्यायस्य ॥३॥
सप्तमं ब्राह्मणम् ॥७॥

दिमतो भिन्नस्तत्सदृशो द्रष्टा नास्ति कश्चित्, तथा अश्रुतत्वविशेषितनिरुपाधि-कशब्दसाक्षात्कारादिमतो भिन्नस्तत्सदृशः श्रोता कश्चिन्नास्तीति । एवं मन्ता विज्ञातेत्यत्रापि ज्ञातव्यम् । इदं च ब्राह्मणं परमात्मपरकमेव न तु जीव-परकमित्यादि समन्वयाध्याये विस्तरेण विचारिमिति । तत एव द्रष्टव्यं विस्तरभयादप्रक्रान्तत्वाच्च नेह प्रतन्यते । अमृत इत्यादिविशेषण-मात्रेणैव जीवव्यावृत्तिसम्भवात् । अतो मया श्रुत्यक्षराणां व्याख्यानमात्रं कृतं न तु विस्तरेण विवेचनं कृतम्, विशेषजिघृक्षुभिर्ब्रह्मसूत्रे एव द्रष्टव्यमिति ॥२३॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
सप्तमं ब्राह्मणं समाप्तम् ॥७॥

સમરીતિર્મદાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવ્યાસો મહામતિઃ॥

Ruleur Nagpal

## अथ तृतीयाध्याये अस्टमं ब्राह्मणम्

**अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्-ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥१॥**

**सा होवाचाहं वै याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्र-पुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते**

प्रणम्य परमात्मनं साकेताधिपतिं प्रभुम् ।
तार्तीयाष्टममन्त्राणां व्याख्यां वच्मि यथामति ॥१॥

उपरते उद्दालके पुनरपि प्रष्टुं गार्ग्याह—

( अथेत्यादि ) अथ होद्दालकस्योपरमानन्तरं वाचक्नवी गार्गी ब्राह्मणान्प्रत्युवाच । इतः पूर्वमन्तर्यामिब्राह्मणे तात्कालिकप्रसिद्धवा-द्युद्दालके याज्ञवल्क्येन पराजिते सति तत्पराजयादेव सर्वेषां पराजयो जात एवेति मन्यमाना गार्गी मातिप्राक्षीरित्यादि सक्रोधयाज्ञवल्क्यवचनेन भीतापि ब्राह्मणानामाज्ञां प्राप्य पुनः प्रश्नकरणाय ब्राह्मणानामाज्ञां ग्रहीतुं ब्राह्मणान्प्रत्युवाचेत्यर्थः । किमुवाच सा तत्राह—

(ब्राह्मणा इत्यादि) हे भगवन्तः पूजार्हा ब्राह्मणाः अहमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि प्रश्नद्वयं पृच्छामीत्यर्थः तौ प्रश्नौ चेन्मे मां वक्ष्यति प्रश्नद्वयस्य मामकीनस्य यद्ययमेत्तरं करिष्यति न जातु तदा कदाचिदपि युष्माकं मध्ये कश्चिदपि ब्राह्मण इमं ब्रह्मोदयं ब्रह्मवादं प्रतिजेता कश्चिदपि कोपि नास्ति । यदि मदीयप्रश्नद्वयस्योत्तरं करिष्यति तदैव मन्तव्यं यदयं केनापि कदाचिदपि

कृत्वोपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥२॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते

पराजितो न स्यादिति भावः। एवं गार्ग्या प्रार्थिता विद्वांसस्तामाहुः—हे गार्गि पृच्छ याज्ञवल्यं वयमनुज्ञां दद्म इति। तदनन्तरं सा चक्नवी याज्ञवल्क्यं प्रत्युवाचोक्तवती। हे याज्ञवल्क्य! यथा येन प्रकारेण काश्यो वा काश्यां भवो राजा वैदेहो वा विदेहदेशभवो वा मैथिल इत्यर्थः अग्रपुत्रो वा शूरवंशोद्भवो राजा। इमे स्वभावतो बलशालिन इत्येतेषामुपादानम्। उज्ज्यं धनुः उत् उत्कृष्टा ज्या यस्मिन् तत् उत्कृष्टज्यं धनुः शरासनं अधिज्यं कृत्वा सन्धाय। द्वौ वाणवन्तौ। प्रकृते वाणपदेन शरस्याग्रभागे यः खण्डः सोऽभिधीयते। कथंभूतौ शरौ सपत्नातिव्याधिनौ शत्रूणामतिशयेन पीडाकारकौ। हस्ते कृत्वा हस्ते समादाय गृहीत्वेत्यर्थः उपतिष्ठेत् शत्रुसमीपे उपस्थितो भवेत्। एवमेव हस्तगृहीतवाण काश्यादि वदेवाहं त्वा त्वां द्वाभ्यां प्रश्नाभ्याम् प्रश्नद्वयमादाय उपोदस्थाम् उपस्थितोऽभवम्। तौ द्वौ प्रश्नौ मे मह्यं ब्रूहि त्वम्। प्रश्नद्वयस्योत्तरं कथय। यथा विदेहादिर्नृपतिः धनुराकृष्य शत्रुव्यथाकारक बाणं चादाय शत्रुसमीपे समुपस्थितो भवेत् तद्वदहमपि प्रश्नद्वयमादाय तवाग्रे उपस्थिता प्रश्नद्वयं पृच्छामि तदुत्तरं देहीति भावः। एवं गार्ग्या पृष्टो मुनिरुवाच पृच्छ गार्गीति। हे गार्गि यदिच्छसि तत्त्वं पृच्छ, नात्र संकोचो विधेयः। ततः सा गार्गी याज्ञवल्क्येनाज्ञप्तोवाच प्रोक्तवती हे याज्ञवल्क्य दिवो द्युलोकात् ऊर्ध्वमुपरि विद्यमानं यत् लोकजातम् तथा पृथिव्या अधस्तनं पृथिव्या नीचैरवस्थितं द्यावापृथिव्यन्तरालवर्तिभूतं ध्वंसप्रतियोगिभवत् वर्तमानकालिकं भविष्यत् प्रागभावप्रतियोगि-

कस्मिंस्तदोतं च प्रोतं चेति ।।३।।

**स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतञ्च प्रोतञ्चेति ।।४।।**

**सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति स होवाच पृच्छ गार्गीति ।।५।।**

कालत्रयपरिच्छिन्नमित्यर्थः यद्वस्तुजातं तत्सर्वं कस्मिन् कीदृशेऽधिकरणे ओतं च प्रोतं च । दीर्घतिर्यक्तन्तुवत् ओतं प्रोतं व्यवस्थितमिति प्रश्नः ।।३।।

एवं गार्ग्या पृष्टो याज्ञवल्क्यः स होवाच-- हे गार्गि दिवो यदूर्ध्वं पृथिव्या अवर्गाग्धस्तनं द्यावापृथिव्यन्तरालमवर्ति कालत्रयानुगतं यद्वस्तुजातं तत्सर्वमाकाशे अव्याकृताकाशे न तु वायुमदाकाशे दीर्घतिर्यक्तन्तुपटवदोतंच प्रोतञ्च अव्याकृताकाशे एतत्सर्वं प्रतिष्ठितमिति । अत्र हि आकाश पदेन न वायुमदाकाशो गृह्यते किन्तु अव्याकृताकाश एव । एतत्तत्वम् । अक्षरमम्ब रान्तधृतेरिति । ब्रह्मसूत्रे यथावत् व्यवस्थापितं तत एव द्रष्टव्यमिति । स्वकीयप्रश्नस्य यथावदुत्तरं ज्ञात्वा तुष्टा सा गार्गी याज्ञवल्क्यं प्रत्युवाच । हे याज्ञवल्क्य ते तुभ्यं नमोस्तु त्वां नमस्करोमि । अद्यावधि श्रुतमेव यत् याज्ञवल्क्यो ब्रह्मज्ञानी किंतु इदानीं ब्रह्मवित्तया त्वां साक्षात्करोम्यतस्त्वां नमस्करोमि । यस्त्वं मे मम एत मम प्रथमप्रश्नं व्यवोचः एतदुत्तरमुक्तवानसि तस्मै ते नम इति पूर्वेणान्वयः, अतः परमपरस्मै द्वितीयप्रश्नं धारयस्व । द्वितीयप्रश्नोत्तरायावधानं कुरु । एवमुक्तो याज्ञवल्क्यः प्राह पृच्छ गार्गीतीति हे गार्गि द्वितीयप्रश्नमपि पृच्छेत्यर्थः ।।५।।

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्चेति ॥६॥

स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति॥७॥

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्य-

ततः सा गार्गी तमुवाच— हे याज्ञवल्क्य दिवो यदूर्ध्वमुपरिभागे स्थितं लोकजातं यत् पृथिव्या अवाक् अधोभागे व्यवस्थितं लोकजातम् कालत्रयपरिच्छिन्नम् तत्सर्वं कस्मिन् प्रतिष्ठितमिति । उत्तरमेतत्सर्वमव्याकृताकाशे दीर्घतिर्यक् तन्तुपटवदोतं प्रोतं चेत्युत्तरम् । पुनः सा पृच्छति— हे याज्ञवल्क्य स खल्वाकाशः कस्मिन् अधिकरणे ओतश्च प्रोतश्च । कालत्रयपरिच्छिन्नवस्तुजाताधिकरणीभूतोऽव्याकृताकाशः कस्मिन् आश्रित इति प्रश्नः ॥७॥

एतत्प्रश्नं श्रुत्वा स याज्ञवल्क्यः प्रोवाच—

(एतद्वैतदक्षरमित्यादि) हे गार्गि यत्त्वया पृष्टं तत् अक्षरम् । अर्थादक्षरे ब्रह्मणि अव्याकृताकाश आश्रित इति । तत्सर्वोपनिषत्सु प्रतिपाद्यतया प्रसिद्धमक्षरम् । अश्नुते सर्वानित्यक्षरमथवा न क्षरति न व्येति यत् तदक्षरम् । ब्राह्मणा ब्रह्मज्ञानिनोऽभिवदन्ति कथयन्ति । न त्वहं कथयामि ब्राह्मणा अभिवदन्तीति कथननेन नाऽहं किञ्चद्विपरीतं सन्दिग्धं वा कथयिष्यामीति व्यज्यते तदक्षरं ब्रह्म कीदृशं तत्राह अस्थूलं स्थौल्यरहितं स्थूलाद्भिन्नमित्यर्थः ननु तस्य निषेधे तस्मिन्नणुत्वं स्यात्तत्राह—

(अनणु इति) यथा तद् ब्रह्म स्थौल्यरहितं तथा अणुत्वरहितमपि।

**स्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाश-मसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखम-**

न चैवं तर्हि ह्रस्वं तत्स्यात्तत्राह अह्रस्वं ह्रसत्वपरिमाणरहितं न चैवं तर्हि दीर्घंस्यात्तत्राह अदीर्घमदीर्घत्वपरिमाणरहितम् । एवं च चतुर्विध-परिमाणनिषेधात् द्रव्यत्वं नैयायिकाद्यभिमतमपि निराकृतं भवतीति । अलोहितं लौहित्यगुणवर्जितम् । अस्नेहम् — स्नेहात्मकगुणरहितम् । अच्छायं छाया नाम प्रतिबिम्बस्तद्रहितम् । अतमः तमोरहितम् । तमसः अत्यन्ताभावोऽन्योन्याभावो वा । भवतु तर्हि वायुरूपं तत्राह अवायुर्वायु-भिन्नम् । अस्तु तर्हि नभोरूपं तत्राह— अनाकाशम् आकाशभिन्नम् । अस्तु तर्हि संगात्मकं जतुवत् तत्राह— असंगम् संगभिन्न । रसस्वरूपं तदक्षरं भवतु तत्राह-अरसं रसात्यन्ताभाववत् रसान्योन्याभाववद्वा । अस्तु तर्हि गन्धात्मकं तदधि-करणं वा तत्राह— अगन्धम् गन्धगन्धवद्भिन्नम् भवतु तर्हि चक्षुरात्मकं तत्राह— अचक्षुरिति चक्षुर्भिन्नम् चक्षुरत्यन्ताभाववद्वा । न हि चक्षुरस्य करणं विद्यतेऽतोऽचक्षुष्कम् । पश्यत्यचक्षुरित्यादि श्रुतेः । तथा अश्रोत्रम् "स शृणोत्यकर्णः" इति मन्त्रवर्णनानात् भवतु तर्हि वाग्रूपं तत्राह अवाक् वाग्रहितम् । अमनो मनोरहितम् । अतेजस्कम् अविद्यमानं तेजो यस्य तत् अतेजस्कम् । अप्राणं प्राणरहितम् एतावता अध्यात्मकवायुप्रतिषेधो भवति । तर्हि मुखं तस्य द्वारं भवतु तत्राह अमुखं मुखरहितम् । अमात्रम् । तत्र मात्रा इन्द्रियाणि तद्रहितम् । यद्वा परिच्छेदरहितम् तदक्षरम् । अस्तु तर्हि छिद्रवत् तत् तत्राह अनन्तरम् नास्यान्तरं विद्यते एवमवाह्यम् । स्वेना-न्यात्मदेशरहितमित्यर्थः । भवतु तर्हि तत् भक्षयितृ तत्राह न तदश्नति किंच-नेति । तदक्षरं कर्तृ न किंचिदपि अश्नाति भक्षयति भक्षणक्रियाकर्तृत्वं तस्मिन्नास्तीत्यर्थः, अस्तु तर्हि कस्यचित् भक्ष्यं तत्राह न तदश्नाति कश्चनेति । तदक्षरं न कोपि अश्नाति भक्षयति । अर्थात् तदक्षरं भक्षणक्रियायाः कर्म न

**मात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥८॥**

**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते**

भवति अतो न भक्ष्यं येन कोपि तस्य भक्षणकर्ता भवेदिति। एतादृश-मक्षरतत्वं गार्गि अव्याकृताकाश ओतश्च प्रोतश्चेति ॥८॥

(एतस्येत्यादि) हे गार्गि एतस्यैवोपर्युक्तस्याक्षरस्य ब्रह्मणः प्रशासने आज्ञायाम् सूर्याचन्द्रमसौ सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ सर्वलोकस्य प्रदीपवत् प्रकाशकौ विधृतौ विशेषेण धृतौ तिष्ठतः स्थितौ भवतः। यथा राजाज्ञायां विद्यमानाः स्वस्वकार्यं नियमरूपेण कुर्वन्ति तथैव यस्याज्ञायां वर्तमाना-वेतौ लोकप्रकाशलक्षणं कार्यं कुरुतः, कदाचिदपि तदाज्ञां नातिवर्तेते "भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति श्रुतेः। तत्र प्रकृष्टं शासनं प्रशासनम्। क्वचिदप्यप्रतिहतत्वमेव-प्रकर्षत्वम्। तथा च सर्वविषयकं तत् शासनमिति फलति। प्रशासितारं सर्वेषामिति श्रवणात्। तथा एतस्यैवाक्षरस्य परब्रह्मणः प्रशासने आज्ञायां द्यावापृथिव्यौ च विधृतौ तिष्ठतः, अक्षराज्ञायामुभे अपि अन्तराले स्थिते भवत एव। एवं च सर्वविषयकशासनाधीनद्यावापृथिव्यादिधारणवत्त्व-मिति पर्यवस्यति। अत्र प्रशासनकर्तृतया प्रधानस्य ग्रहणं न सम्भवति। प्रधानस्य सर्वधारकत्वेपि शासनाधीनधारकत्वं नास्ति अचेतनतया प्रशासन-स्यैव तत्राभावात्। जीवस्य चेतनत्वेन प्रशासनाधीनघटपटादिधारकत्वेपि सर्वविषयक प्रशासनाधीन सर्वधारकत्वस्याभावात् जीवस्यापि तथात्व नास्त्येव। अतः प्रधानं वा जीवो न प्रतिपाद्यते। किन्तु सर्वशासकः सर्वधारकः परमात्मैव साकेताधिपतिः। विशेषतश्च "सा च प्रशासनादिति" ब्रह्मसूत्रव्याख्यायां स्पष्टीकृतं विद्यते, तत एव द्रष्टव्यमिति। हे गार्गि एतस्य प्रकृतस्याक्षरस्य परमात्मनः प्रकाशने आज्ञायां स्थिताः प्राच्यो नद्यः पूर्वदिशि प्रवाह-- विद्यते, यासां तथाविधा गंगादिप्रमुखा निम्नगाः श्वेतेभ्यो हिमवद्-

**तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्व्वतेभ्यः प्रतीच्योऽन्या यां यांञ्च दिशमन्वेति । एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥९॥**

**यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते**

लत्वात् शुक्लप्रायेभ्यो हिमवदादिभ्यः पर्वतेभ्योऽवतरन्त्यो लोकानां तत्तीरवासिनामन्येषां चोपकारायाद्यापि स्यन्दन्ते प्रवाहिता भवन्त्येव । परमात्मकर्तृकप्रशासनाभावे तु प्रवाहात्मककार्यकरणाय ते समर्था न प्रभवन्ति । एवं प्रतीच्यः पश्चिमप्रवाहाः सिन्धुप्रमुखा नद्यः तथा अन्या उदङ्मुखा नद्यः यां यां दिशमनुप्रस्थितास्ताः सर्वा अपि नद्यः एतस्याक्षरस्य प्रशासने सत्येव स्यन्दन्ते प्रवाहिता भवन्ति । तथा हे गार्गि एतस्याक्षरस्य प्रशासने निमित्ते ददतो दानं कुर्वतः भगवदाज्ञया दानं कुर्वतः भगवदाज्ञापालनबुद्ध्या दानं ददतो जनान् । अन्वयत्ताः वशंवदाः सन्तो मनुष्याः प्रशंसन्ति । यो हि भगवदाज्ञापरिपालन बुद्ध्या दान कुर्वन्ति तेषां मनुष्यः प्रशंसां कुर्वन्तीत्यर्थः एवं भगवदाज्ञापरिपालन बुद्ध्या यज्ञं कुर्वन्तं यजमानं यागकर्तारं देवाः प्रशंसति तथा दर्वीहोमं कुर्वाणमन्वायत्ताः पितरस्तं प्रशंसन्ति इति ॥९॥

(यो वा हेत्यादि) हे गार्गि यो हि पुमान् एतदक्षरं परमात्मानमविदित्वा तदाज्ञामननुवर्तमाना अस्मिन् लोके जुहोति होमादिकं करोति यजते अग्निष्टोमादियागं कुरुते तपः कृच्छ्रचान्द्रयणादितपस्यां तप्यते करोति, यद्यपि बहूनि वर्ष सहस्राणिसहस्रवर्षपर्यन्तमपि करोति, तथापि अन्तवदेव विनश्वर फलसाधनमेव मेव भवति । फलोपभोगावसाने विनष्टमेव भवति । एवमेवात्र पुण्यचितो लो : क्षीयते इति श्रुतेः किं बहुना य एनमविदित्वाऽस्मात् लोकात् मनुष्य लोकात् प्रैति लोकान्तरं गच्छति स कृपणः

**तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वा अस्माल्लोकात्प्रैति, स कृपणः । अथ गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥१०॥**

**तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति**

परमात्मज्ञानं विना लोकान्तरे गतस्यापि शोचतैव भवति । एव परमात्मनोऽज्ञानात् संसारभाग्भवति । परमात्मानमन्तरेण क्रियमाणं सर्वमपि कर्म विनश्वरफलकं भवति, तदज्ञानामृतस्य लोकान्तरगतस्य शोच्यता तदज्ञानात्संसारोपि भवतीति भावः । हे गार्गि अथ यः पुरुष एतदक्षरं परमात्मानं विदित्वा उपासनं कृत्वाऽस्मात् लोकात् प्रैति स ब्राह्मणः ब्रह्मवित् । ब्रह्मणोऽनुभवकर्ता सद्यो मुक्तः साकेतपुरभाग् भवतीति एतावता परमात्मज्ञानं मोक्षकफलकं तदज्ञानं संसारफलकमिति सूचित भवतीति भावः ॥१०॥

(तद्वा एतदित्यादि) हे गार्गि तद्वा एतक्षरं ब्रह्म । अदृष्टमयोगिभिर्द्रष्टुमशक्यमपि स्वयं द्रष्टृ रूपादिसाक्षात्कर्तृ भवति । अश्रोतृ । योगिव्यतिरिक्तैः श्रोतुमशक्यमपि श्रोतृ शब्दसाक्षात्कर्तृ । अमतं मंतृ । मन्तव्यविषयसाक्षात्कर्तृ । अविज्ञातं विज्ञातृ अध्यवसेयपदार्थविषयकसाक्षात्कर्तृ ।

( नान्यदतोस्तीत्यादि ) अतः परमात्मनोऽन्यत् अन्यः परमात्मसदृशस्तद्भिन्नो नास्ति कश्चित् द्रष्टृ रूपादिसाक्षात्कर्ता । यद्यपि अन्यशब्दो भिन्नार्थकस्ततश्च परमात्मभिन्नः कश्चिद्द्रष्टाना स्तीत्यर्थो यथाश्रुतानुसारेण घटित इव भवति. तथापि प्रकरणपर्यालोचनया अन्य शब्दस्य तद्भिन्नतत्सदृशार्थकत्वस्यैवावश्यकत्वात् । तथा च यथा साकेताधिपतिरेवराजा नान्य इति कथनेन तत्सदृशराजनिषेधपरत्वं तद्वाक्यं, न तु सामान्यतो

**मन्तृ नान्यदतोऽस्ति विज्ञात्रे तस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥११॥**

**सा होवाच ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्न-**

भूपतिनिषधपरकत्वमेव प्रकृते अदृष्टत्वादि गुणविशिष्टनिरुपाधिक-द्रष्टृत्वाश्रयीभूतपरमेश्वरादन्यः परमेश्वरसदृशः कोपि नास्तीत्यर्थ एव सम्यगाभाति । अथवा यथा प्रकृतमक्षरं ब्रह्म अयोगिभिरदृष्टं भवत् स्वाभिन्नसर्वस्याधारभूतम् । एवमनेनाक्षरेणा ब्रह्मणोदृष्टमेतस्याधारभूत-मस्य द्रष्टा अन्यः कश्चिन्नास्तीत्यर्थः । अत्र पूर्वव्यख्याने परमेश्वरसदृशस्य-निषेधो वर्णितोऽपरव्याख्यायां तु परमेश्वरादधिकः कोपि नास्तीति परमेश्वरा-धिकस्य निषेधो वर्णितो भवतीति । यद्यपि "नेह नानास्ति किंचन" इति वाक्यं यथा ब्रह्मात्मकवस्तु निषेधपरकं नान्यदतोस्तीतिवाक्यमपि ब्रह्मात्मकवस्तु-निषेधपरकमेव भवतु परमेश्वरतुल्याभ्यधिकनिषेधपरकत्वं कथमिति तथापि "नेह नानास्ति किंचन" इति वाक्यवत् प्रकृते ऐक्यविधिशेषत्वाभावेन तुल्या-धिकनिषेधपरत्वस्यैवोपयुक्तत्वादिति । एव नान्यदतोस्ति श्रोतृ । परमात्म-भिन्नं परमात्मसंश्रोतृ न किमपि विद्यते परमात्मभिन्नपरमात्मसदृशं मन्तृ-अन्यनास्तीति परमात्मभिन्नं परमात्मसदृशं विज्ञातृ तदन्यन्नास्ति किमपी-ति प्रकरणमुपसंहरति ।

(एतस्मिन्नित्यादि) एतस्मिन्पूर्ववर्णिते अक्षरे परमात्मनि आकाशः ओतश्चप्रोतश्च दीर्घतिर्यग्तन्तुवत्यत्त्वया पृष्टं तदेतदेवेति ॥११॥

एवं याज्ञवल्क्येन प्रतिबोधिता सा गार्गी ब्राह्मणान् प्रत्युवाच । हे भगवन्तो ब्राह्मणाः पूजनीया विद्वांसो यूयं तदेव बहु अधिकं मन्ये यतस्माद् याज्ञवल्क्यज्ञानिनो नमस्कारं नमोवादं कृत्वा मुच्येध्वम् मुक्ता भवत । ईदृ-शस्य विदुषो भवद्भिः कथमपि कदाचिदपि पराजयो न शंकनीयः केवलं नमोवादं कृत्वैवंत्तस्मात् मुक्ता भवतेति

मस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥१२॥

इति बृहदारण्यकोपनिषदि तृतीोध्ययायास्य अष्टमं ब्राह्मणम् ॥८॥

( न वै जातु इत्यादि ) युष्माकं मध्ये इमं याज्ञवल्क्यं कश्चिदपि ब्राह्मणो ब्रह्मोद्यं ब्रह्मवादं प्रति नैव कश्चित् जेता विजयशीलो वर्तते मया बहुशः परीक्षितोऽयं सत्यमेवायं ब्रह्मज्ञानी अनेन यद्गवाहरणं कृतं तद्युक्तमेव कृतमिति । ततः तदनन्तरं ब्राह्मणं प्रति स्वाभिप्रकाशनन्तरं वाचक्नवी वचक्नुपुत्री कथात उपरामोपरताऽभूदिति ॥१२॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
तृतीयाध्यास्याष्टमं ब्राह्मणम् ॥३॥८॥

---

## तृतीयाध्याये नवमं ब्राह्मणम्

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च

(अथ हैनमित्यादि) अथ वाचक्नव्या उपरमानन्तरं एतं प्रकृतं याज्ञवल्क्यं विजेतु कामः शाकल्यः शसलस्यापत्यं पुमान् तन्नमको ऋषिः विधोविद्वान् आत्मानं समर्थंमन्यमानः पप्रच्छ पृष्टवान् ।

(हे याज्ञवक्येति) संबोधनं कृत्वा प्रोवाच कति देवा । दीव्यन्ति सर्वोत्कर्षेण वर्तन्ते इति देवास्ते कति कियत्संख्यकाः सन्तीति । एवं पृष्टः स याज्ञवल्क्यः एतया वक्ष्माणया निविदा प्रतिपेदे देवतासंख्यां प्रत्यपादयत् उक्तावानित्यर्थः । एतदेव विस्पष्टयति ।

**त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्ये कत्येक इत्योमिति होवाच कतमे ते त्रयश्च**

(यावन्त इत्यादि) वैश्वदेवस्य शास्त्रस्य निविदि संख्यावाचकमंत्रविशेषे। एता ह निविद्यां यावन्तो यावत्संख्यका देवा उच्यन्ते कथितास्तावन्त एवन्त एव देवाः। कियन्तो निविद्यां देवाः श्रूयन्ते तत्राह—

( त्रयश्च त्री च शता ) त्रयश्च त्रीणि च शतानि त्र्याधिकं त्रिशतमित्यर्थः। त्रयश्च त्री च सहस्रेति संख्यात्रयेणाधिकात्रिसहस्रीत्यर्थः।

(ओमित्यदि) शस्यमानदेवतासंख्यासूचकमन्त्रप्रतिपादितदेवसंख्यां श्रुत्वा प्रसन्नमना इवात्मानं प्रदर्शयन् विदग्धः शाकल्यः स्वीकारात्मकवचनमुवाचौमिति। याज्ञवल्क्य यद्भवताकथितं तत्स्थूलदृष्ट्या युक्तमेव सूक्ष्मदृष्ट्या तु पृच्छामि। कत्येव देवाः कियत्संख्यका देवाः? प्रश्न इदानीं तु संख्येयदेवविषयकः प्रश्न इति। याज्ञवल्क्यः प्राह त्रयस्त्रिशदिति त्रयस्त्रिशत्संख्यका देवा इत्यर्थः। ओमिति होवाच विदग्धः पुनरपि स्वीकारवचनमेवाभिव्यंजितम्। पुनरपि सूक्ष्मदृष्टया पृच्छति।

(कत्येव देवा याज्ञवल्क्येति) याज्ञवल्क्यः प्राहोत्तरम्। षडिति संक्षेपतः षडेव षट्संख्यका एवेति। ततो विदग्धः प्राह

(ओमिति होवाचेति) पुनः प्रश्नः कति देवाः त्रयः इत्युत्तरम्, पुनः प्रश्नः कतिदेवाः द्वावित्युत्तरम्, पुनः प्रश्नः कतिदेवाः। अध्यर्धः अर्धादधिक एक इत्युत्तरम्। पुनः प्रश्नः कति देवाः। एक एव देव इत्युत्तरम्, उत्तरानन्तरं सर्वत्र ओमिति विदग्धस्य स्वीकारवचनम्। एवं प्रकारेण देवता

त्री च शता त्रयश्च त्री च सहस्रे ति ॥१॥

स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एक-

सम्बद्धां संक्षेपविस्ताराभ्यां संख्यां पृष्ट्वा तदुत्तरं च यथावदवगत्य संप्रति तादृशसंख्ययापरिच्छिन्नं देवस्वरूपं प्रष्टुमाह विदग्धः ।

(कतमे च ते इत्यादि) कतमे च ते देवाः । उत्तरम् त्रयश्च त्रीशता-त्रयश्च त्रीसहस्रे ति त्रयस्त्रिशतो देवानाम् त्रिशताधिकत्रिसहस्रमेदा भवन्ति ॥१॥

कथमेवं तत्राह—

( स होवाच महिमान एवेत्यादि ) एतेषामेवंभूता महिमानो गुणायतो गुणविशेषादेते यथोक्तसंख्यका एव भवन्ति न न्यूना ना-भ्यधिका इति । विशेषत एतत् तत्त्वम् "विरोधे कर्मणि" इति सूत्रे आचा येंण स्वयमेव प्रतिपादितमिति । पुनः पृच्छति ।

(कथमेते इत्यादि) त्रयस्त्रिशतमेते देवाः ।

( कतमे कियन्त इति ) उत्तरमष्टावित्यादि । वसवोष्टौ रुद्रा एका-दशसंख्यकाः आदित्या द्वादशसंख्यकाः मिलित्वा एकत्रिंशत् तथा इन्द्र एकः एकश्च प्रजापतिः सर्वे मिलित्वा त्रयस्त्रिशत्संख्यका भवन्तीति ॥२॥

पुनः प्रश्नः कतमे वसव इतीति अष्टौ वसवः कथितास्ते के इत्यर्थः । उत्तरम् ।

( अग्निरित्यादि ) अग्निर्वैश्वानरः पृथिवीलोकाधारभूता वायु-रीरणस्वभावः अन्तरिक्षमादित्यो द्यौश्चन्द्रमा नक्षत्राणि । एते अष्टौ वसव एते एव वसव शब्दवाच्या भवन्ति । वसु धनं तद् हितम् इति वसवो यस्मादग्न्यादिष्वेव सर्वं धनं निहितं तस्मादेते वसव इति । अत्राग्निपदमऽन्याभिमा-

**त्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशा इति ।।२।।**

**कतमे वसव त्यग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्व्वं हितमिति तस्माद्वसव इति ।।३।।**

**कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ।।४।।**

**कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या**

निदेवपरकम् । एवं पृथिव्यादिकमपि तत्तदभिमानिदेवपरकमेवेति ।।३।।

पुनः प्रश्नयति ।

( कतमे रुद्रा इत्यादि ) एकादशरुद्राः कथितास्ते के एकादश इति उत्तरयति ।

( दशम इत्यादि ) अस्मिन्पुरुषे शरीरसंघातविशिष्टे ये दशप्राणाः ज्ञानेन्द्रियाणि पंच पंच च कर्मेन्द्रियाणि आत्मा एकादश अत्रात्मपदं मनसो बोधकम तथा पंच ज्ञानेन्द्रियाणि चक्षुरादीनि पंच कर्मेन्द्रियाणि वागादीनि मन इत्येतानि मिलित्वा एकादशसंख्यकानि तस्माद्रुद्र एकादशेति ।

( ते यदेत्यादि ) ते इन्द्रियपदवाच्या एकादश यदा यस्मिन्कालेमर्त्यात् मरणधर्मकात् अस्मात् प्रत्यक्षदृष्टशरीरात् उन्क्रामन्ति शरीरमपि संपरित्यज्य गच्छन्ति एवं म्रियमाणं पुरुषं रोदयन्ति व्यथयन्ति शरीरादिन्द्रियाणां निर्गमावसरे महती पीडा भवतीति शुश्रुमः । तद्यस्मात् कारणादेते प्राणाः पुरुषं रोदयन्ति तस्मादिमे रुद्रा रुद्रवाच्या भवन्ति रोदनात् रोदनकारणादिमे रुद्रा, रोदयन्तीति रुद्रा म्रियमाण पुरुषस्य परिवारान् रोदयन्ति तस्माद् इमे इति ।।४।।

आदित्य विषयकं प्रश्नं पृच्छति ।

एतेहीदं सर्व्वमाददाना यन्ति तस्मादादित्या इति ॥५॥

कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥६॥

**कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्चैते षडेते हीदं सर्व्वं षडिति ॥७॥**

(कतमे आदित्या इत्यादि) हे याज्ञवल्क्य आदित्याः कतमे कियत्संख्यकाः के इति प्रश्नः। उत्तरयति।

(द्वादश वै इत्यादि) हे शाकल्य संवत्सरस्य तदात्मककालस्य संबन्धिनो ये द्वादशवैशाखादिकामासास्त एव द्वादशादित्या। एते हि द्वादशमासाः पर्यायेण प्रवर्तमाना इदं सर्वं सर्वोत्पत्तिमतां जीवितमाददाना अपहरन्तो यन्तिगच्छन्ति। एतेष्वेव सर्वोपि स्वस्वजीवनमतिक्रामन्ति। ते द्वादशमासाः यस्मात् कारणात् सर्वस्य जीवितमाददाना अपहरन्तो यन्ति गच्छन्ति तस्मात् कारणात् इमे आदित्या :आदित्यपदवाच्या भवन्ति। आदित्यक्रिययैव क्षणमासादिव्यवहारा भवन्ति। त मासा आदित्याः, मासेष्वेव सर्वेषां जीवितमपगच्छतीति ॥५॥

कतम इन्द्रः कतमः प्रजापतिरिति प्रश्नः स्तनयित्नुर्मेघः स एवेन्द्रः यज्ञ एव प्रजापतिः। तत्र यज्ञः क इति प्रश्ने। पशवो यज्ञः यज्ञसाधनत्वात् पशौ यज्ञत्वव्यपदेशः इति ॥६॥

कतमे षडिति प्रश्नः अग्निश्चेत्यादिकमुत्तरम्। इदं सर्वमेते षडेवेति ॥७॥

कतमे ते त्रयो देवा इतीम इव त्रयो लोका एषु हीमे सर्व्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नञ्चैव प्राणश्चेति कतमोऽध्यर्ध इति योयं पवत इति ।।८।।

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदं सर्व्वमध्यार्ध्नोत्तेनाध्यार्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ।।९।।

पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिर्यो वै तं पुरुषं

कतमे ते त्रयो देवा इति प्रश्नः त्रयो लोका एव त्रयो देवाः । सर्वदेवानामाधारभूतत्वात् त्रयो लोका एव देवा इति । कतमौ तौ द्वौ देवाविति पूर्वपक्षः उत्तरयति अन्न प्राणश्चेति द्वौ देवाविति । अध्यर्धः कतम इति प्रश्नः योयं वायुः पवते स अध्यर्धः इत्युत्तरम् ।।८।।

कथमेतस्य नाम अध्यर्धस्तत्राह तदाहुरित्यादि । यस्मादयमेक एव इह पवते एवमाहुः पूर्वे ऋषयः । एतावता अपि कथमयमध्यर्धः तत्राह

( यस्मिन् इत्यादि ) यस्मिन् वायौ इदं सर्वमध्यार्ध्नो अधिकवृद्धिप्राप्तवान् तेन तस्मात् कारणात् अयं वायुरध्यर्ध इति कथितो भवतीति । एको देवः कतम इति प्रश्नयति कतम एक इत्यादि एको देवः कतम इति प्रश्नः उत्तरयति । प्राण एव एको देव इति । ननु प्राणो हि पवमानवायुपर्यायः स कथमध्यर्ध उक्त इत्याशंकायामाह स ब्रह्मेत्यादि । स प्राणो ब्रह्म । प्राणशब्दस्य ब्रह्मपरत्वात् । त्यदित्याचक्षते । एवं च ब्रह्मणो महिमानः सर्वे देवाः । इति वायोरपि ब्रह्ममहिमतया अध्यर्धत्वं स भवतीति ।।९।।

पुनः शाकल्यः पृथिव्येवेत्यादि । यस्य पृथिवी एवायतनम् आधारः

**विद्यात्सर्व्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायं शारीरः**

शरीरमित्यर्थः अग्निरेव लोकः तत्र लोक्यते दृश्यतेऽनेनेति लोको दर्शनं साधनं अग्निना पश्यति इति प्रयोगदर्शनात् । मनो ज्योतिः अत एव ज्योतिरिति मनोज्योतिः संकल्पविकल्पादिकार्यकारि यस्य भवति स मनोज्योतिः तथा सर्वस्यात्मनः परायणमाधरम् ईदृशं तं पुरुषं यः कश्चिदुपासको विद्यात् जानीयात् स वै लोके वेदिता स्यात् नान्यः । हे याज्ञवल्क्य किं तादृशं पुरुषं त्वं जानासि । पृथिव्याधारत्वेनाग्निदर्शनकत्वेन मनसा संकल्पयितृत्वेन ध्यातव्यः स पुरुषः, इदृशस्तु परमेव स पृथिव्याद्याधारतया ज्ञातव्यः यो हीत्थं ज्ञाता स एव परमार्थतो ज्ञाता नान्य इति त्वं किं तं जानासीति प्रश्नस्य मुकुलितोर्थः । एवं पृष्टो याज्ञवल्क्यः प्राह ।

(वेद वा अहमित्यादि) हे शाकल्य वेद वै अहं तं पुरुषम् । अत्र वै शब्द एवार्थकस्तथाच यं पुरुषं त्वं सर्वस्यात्मनः परायणमाधारभूतम् पृथिव्याधारतयोपास्यं यं त्वमात्मवदसि तं परमात्मानमहं वेदैव जानाम्येवेति । कोसौ स पुरुषस्तत्राह ।

(य एवायं शारीर इत्यादि) य एवायं शारीरः पुरुषः तत्र शरीरे भवः शारीरो जीवः तस्य शारीरस्यान्तर्यामी यः तमहं जानामीति । अथवा शरीरशारीररक्षको जगत्शरीरकः जनिमत्वलक्षणसामान्यधर्मपुरस्कारेण शरीरपदं जगतदुपलक्षणम् । एवं जगत्शरीरकत्वविशिष्टः सर्वात्मपरायणः पुरुषशब्दबोध्यः परमात्मा पृथिव्यादीनामाधारतयोपासनीय इति । शाकल्येन यत्पृष्टं तस्योत्तरं दत्वाऽस्मिन् विषये यद् विशेषणानन्तरं ज्ञेयमवशिष्यते तत्स्वयं याज्ञवल्क्यः पृच्छति ।

(वदैव शाकल्य इत्यादि) हे शाकल्य वद त्वं यत् तस्य पृथिव्याद्यायतनत्ववेदितुरुपास्या देवता का कीदृक्संज्ञादिविशिष्टतयोपास्येति । उत्तरं

पुरुषः स एष वदैव शाकल्य तस्य का देवपेत्यमृतमिति होवाच ॥१०॥

काम एव यस्यायतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥११॥

अमृतमिति । अमृतमित्याकारकसंज्ञाविशिष्टा सा देवतोपास्येत्यर्थः । स त आत्माऽन्तर्याम्यमृत इत्यादौ परमात्मन एव निरतिशयामृतत्वश्रवणादिति । अथवा वदैव शाकल्य इति । याज्ञवल्क्यस्यैव सम्यगुत्तरं याज्ञवल्क्यात् प्राप्य तूष्णीमिव स्थितं शाकल्यं प्राह याज्ञवल्क्य हे शाकल्य वदैव पृच्छ यद् यदपि प्रष्टव्यं तत् मा तूष्णी भूः । ततः स उवाच ।

( तस्य का देवतेति ) ततो याज्ञवल्क्यः प्राह अमृतमिति अमृतमिति संज्ञया सा देवता समुपास्येति ॥१०॥

(काम एवेत्यादि) काम एव यस्यायतनमाधारो हृदयं लोको ज्ञानसाधनम् । मनोज्योतिः सर्वस्यात्मनः परायणं तं पुरुषं यो विद्यात् जानीयात् हे याज्ञवल्क्य स एव वेदिता स्यात् नान्यः, किं त्वं तं पुरुषं जानासीति पृष्टे याज्ञवल्क्यः प्राह जानामि स पुरुषः काममयः स पुरुषः तस्य का देवतेत्यादि पूर्ववत् प्रश्नादिकं कृत्वा स्त्रिय देवतेत्युत्तरम् । स्त्रीशरीरकतया सा देवता समुपासनीयेति ॥११॥

(रूपाण्येवेत्यादि) यस्यायतनं रूपाणि । रूपसामान्यम् चक्षुर्लोक इत्यादिकं सर्वं पूर्ववदवानुसंधेयम् । अत्रोपास्या देवता सत्यात्मिका "तद्य

आकाश एव यस्यायतनं श्रोत्रं लोको मनोज्योतिर्यो वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायं श्रोत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥१३॥

तम एव यस्यायतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः पुरुषः स एष वदैव शाकल्यः तस्य का देवतेति मृत्युरिति होवाच ॥१४॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा

त्सत्यमसौ स आदित्यो य एष एव तस्मिन्मण्डले पुरुष इति श्रुत्यन्तरादिति ॥१२॥

(आकाश एव यस्यायतनमित्यादि) पूर्ववदेव व्याख्यानम् । अश्रोत्रः श्रोत्रेण शब्दकरणेनानुभूयमानः । प्रातिश्रुत्कः प्रतिध्वनिविशिष्टः पुरुषः, यद्यपि श्रोत्रेण साक्षादनुभूयमानत्वं परमात्मनो नास्ति चक्षुषा न पश्यतीति प्रश्नोपनिषदि श्रौत्रादिविषयत्वप्रतिपादनात् । तथापि प्रतिध्वनिद्वारेण परमात्मनः श्रौत्रेणानुभूयमानत्वं ज्ञातव्यमिति देवतेत्यत्र दिग्रूपा । दिग्रूपत्वेनोपासनीयेति ॥१३॥

(तम एव यस्यायतनमित्यादि) यस्यायतने तमः तमःशरीरकमित्यादि क्रमेणायमपि मंत्रो व्याख्येयः । अत्र मृत्युरेव देवता यतो बालाक्यजातशत्रु संवादे "छायापुरुषेमृत्युरिति वा अहमेतमुपासे" एव दर्शनात् ॥१४॥

**अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषःस एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥१५॥**

**आप एव यस्यायतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्व्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥१६॥**

**रेत एव यस्यायतनं हृदयं लोको मनो ज्योतिर्यो वै तं पु विद्यात्सर्व्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद अहं तं पुरुषं सर्व्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रम**

(रूपाण्येव यस्यायतनमित्यादि) यद्यपि यस्मिन्नेव ब्राह्मणे मंत्रोयम् -गतस्तथापि पूर्वमंत्रे आदित्यपुरुषे रूपसामान्यं कथितमत्र तु रूपविशेषशुक्लादीनां ग्रहणमित्युभयो र्भेदो भवतीति । तस्य का देवतेति असुरिति । यद्यपि मंत्रोयं बालाकिब्राह्मणेप्यागतस्तथापि तत्र प्रातिश्रुत्क पुरुषेऽसुत्वं कथितमिह तु आदर्शपुरुषेऽसुत्वं कथितमेव मेव तत्रादर्शपुरुषे रोचिष्णुत्व कथितमिति प्रकारभेदान्मन्त्रयोः पार्थक्यमिति । अयमाशयः बालाकिब्राह्मणे स्पष्ट ब्रह्मलिंगाभावात् तत्र विद्यमानपुरुषशब्द एव पर्यन्तार्थबोधको भवति । इह तु सर्वात्मत्वसर्वपरायत्वादिस्पष्टलिंगस्य विद्यमानत्वान्न पुरुषशब्दो न ब्रह्मपर्यन्तार्थबोधक इत्युभयोर्वैलक्षण्यमिति ॥१५॥

(आप एव यस्यायतनमित्यादि) मंत्रद्वयं पूर्ववदेव व्याख्येयम् । केवलमुक्ताष्टपुरुषेषु मनोज्योतिष्ट्वं सर्वत्रैव समानमेव परमायतनानां लोकानां च धर्माणां परस्परं भेद इति परस्परं मन्त्राणां भेदो भवत्यन्यत्सर्वसममेवेति ॥१७॥

**पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥१७॥**

**शाकल्येति होवाच याज्ञवल्क्यस्त्वां स्विदिमे ब्राह्मणा अङ्गारावक्षायणमक्रता ३ इति ॥१८॥**

**याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः प्रतिष्ठाः इति यद्दिशो वेत्थ स देवाः सप्रतिष्ठाः ॥१९॥**

एवं प्रकारेण कुतर्कग्रथितप्रतिवादकुपितो याज्ञवल्क्यः शाकल्यं हे—

( शाकल्येतीति ) हे शाकल्येति संबोध्य याज्ञवल्क्यः उवाच प्रोक्तवान् । हे शाकल्य ! इमे ब्राह्मणाः समास्थितास्त्वत्पक्षमवलम्बमानास्त्वां शाकल्यम् अंगारा वक्षयणम् अग्निपात्रात् अंगारनिःसारकपात्रविशेषं साडसीति लोकप्रसिद्धं अकृत कृतवन्तः । अयमाशयः यथा अंगारनिःसारकपात्रं वह्निना दग्धं भवति तद्वत्त्वमपि मया सह प्रतिवादं कुर्वन् अवश्यं दग्धो भविष्यसि । यथा स पात्रविशेषो जडत्वात् स्वानिष्टं न वेत्ति तद्वत् जडस्त्वं न वेत्सि । एते त्वामग्रे कृत्वा त्वां पातयिष्यन्तीति ॥१८॥

एवं याज्ञवल्क्येनोक्तः शाकल्यो हे याज्ञवल्क्येति प्रोवाच यत्त्वं कुरुपाञ्चालानां कुरुपांचालदेशास्थितान् विदुषो ब्राह्मणान् अत्यवादीरधिक्षिप्तवानसि । एते स्वयं भीतास्त्वामंगारावक्षयणं कृतवन्त इत्येवं क्रमेण । तत् किं त्वं ब्रह्मविद्वानसि ब्राह्मज्ञानवानसि । अहं सदेवाः देवतासहिताः सप्रतिष्ठाः प्रतिष्ठासहिताः दिशो वेद जानासि अहं तु तादृशीं तां दिशं जानामि इति ॥१९॥

**किंदेवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन् प्रतिष्ठत इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥२०॥**

किं त्वमहमिव जानासि ? जानासि चेत् तर्हि त्वामहं पृच्छामीत्याशयेनाह किं देवतोऽस्यामित्यादि । प्रच्यां दिशि पूर्वादिशायाम् किं देवतस्त्वमसि का देवता विद्यते यस्य स किं देवतः । पूर्वदिगधिष्ठातृत्वेनकां देवतां त्वमुपास्से इत्यर्थः । उत्तरयति याज्ञवल्क्यः आदित्यदेवत इति आदित्यो हि पूर्वदिशो देवता आदित्यो देवता यस्य स आदित्यदेवतः । प्रागदिगधिष्ठातृतयाहं आदित्यस्योपासनं करोमीति भावः । पुनः पृच्छति स आदित्यः कस्मिन् इत्यादि स आदित्यः पूर्वदिगधिष्ठातृदेवः कस्मिन् अधिकरणे प्रतिष्ठितः स्थित इति प्रश्नः चक्षुषि प्रतिष्ठित इत्युत्तरम् । चक्षुः कुत्र प्रतिष्ठितमिति प्रश्नः रूपेष्विति उत्तरम "इन्द्रियेभ्यः परा ह्यर्थाः" इतिश्रुतेः । रूपेषु कथं चक्षुः प्रतिष्ठितमिति तत्रोपपत्तिमाह ।

(चक्षुषा हीत्यादि) हि यस्मात् कारणात चक्षुषा चक्षुरिन्द्रियेण रूपाणि नीलपीतादिकानि पश्यति जानाति तस्मात् चक्षुः स्वविषये प्रतिष्ठितमिति । पुनः पश्नयति कस्मिन्नु रूपाणि विषय भूतानि प्रतिष्ठितानीति । उत्तरम् हृदये इति होवाच । चक्षुषो विषयभूतं रूपं हृदयेन्तःकरणे प्रतिष्ठितमिति । तदेवोपपादयति

( हृदयेन हीत्यादि ) हृदयेनान्तःकरणेन रूपाणि नीलादिकानि जानात्यवगच्छति । अतो हृदये रूपाणि प्रतिष्ठितानि भवन्ति । यद्यप्यन्तःकरणस्य निरतिशयत्वनया तत्ररूपावस्थानं न संभाति तथापि वासना रूपेण रूपाणि हृदये प्रतिष्ठितानि वासनाया हृदयाधिष्ठानात् ।

**किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन् प्रतिष्ठित इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदाह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२१॥**

**किंदेवतोस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः**

(इत्येवमित्यादि) हे याज्ञवल्क्य इति त्वया यदुक्तं तत्सर्वमेवमेवांगीकरोमि । तथैतदन्यदपिपृच्छामि ।

(कि देवत इत्यादि) किं देवतोऽस्यां दक्षिणायां दिश्यसीति । दक्षिणदिगधिष्ठातृ देवः क इति प्रश्नः । यमदेवत इत्युत्तरम् । स यमः कस्मिन् प्रतिष्ठित इति प्रश्नः । यज्ञेयमः प्रतिष्ठित इत्युत्तरम् । यज्ञः कुत्र प्रतिष्ठित इति प्रश्नः दक्षिणायामित्युत्तरम् । दक्षिणा कुत्र प्रतिष्ठितेति प्रश्नः श्रद्धायामित्युत्तरम् । अतो यदैवश्रद्धां करोति तदनन्तरमेव दक्षिणादानोन्मुखो भवति अतो दक्षिणाश्रद्धायामेवाश्रिता । श्रद्धा कुत्र प्रतिष्ठितेति पुनः पूर्वपक्षः उत्तरयति । हृदये श्रद्धा प्रतिष्ठिता । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधीभीरित्येतत्सर्वं मन एवेति श्रुत्यन्तरेण श्रद्धाया हृदयसमवेतत्वात् । एतदेवोपपादयति

(हृदयेन हीत्यादि) हृदयेनान्तःकरणेन विज्ञाता श्रद्धां विजानाति अतो हृदये सा श्रद्धा प्रतिष्ठितेति । इति । इति श्रुत्वा शाकल्यः प्राह एवमेतद् याज्ञवल्क्यः सत्यं भवता प्रतिपादितं यत् श्रद्धा हृदये प्रतिष्ठितेति ॥२१॥

(किं देवतोऽस्यां प्रतीच्यामित्यादि) पुनरपि शाकल्यः पृश्नान्तरं

कस्मिन् प्रतिष्ठित इत्यप्स्विति कस्मिन्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तोहृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येनेवैतद्याज्ञवल्क्य ।।२२।।

किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन् प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा

पृच्छति हे याज्ञवल्क्य ! यस्यां प्रतीच्यां दिंशित्वमवस्थितोसि तस्या-दिशोधिष्ठातृ देवता केति वरुणस्तस्याधिष्ठातृ देव इति प्रवचनम् । स वरुणः कुत्र प्रतिष्ठित इति पुनः प्रश्नः अप्सु जलेषु वरुणः प्रतिष्ठित इति उत्तरम् जलं कुत्र प्रतिष्ठिमिति प्रश्नस्य रेतसीत्युत्तरम् रेतः कुत्र प्रतिष्ठितमिति प्रश्नस्य हृदये रेतः प्रतिष्ठितमित्युत्तरम् । रेतसो हृदयाधिष्ठानत्वमुप-पादयितुमाह ।

(तस्मादपीत्यादि) यस्मात् कारणात् प्रतिरूपं पितुः संस्थानरूपादि सदृशसंस्थानरूपादिमन्तं जातुं पुत्रम् लोका एव माहुर्यदयं पुत्रो हृदयात् पितुर्हृदयात् सृतो जातः एवं मन्यामहे पितुर्हृदयादिवनिर्मित उत्पादित इति तस्मात् कारणादपि मन्ये यत् हृदये एवरेतः प्रतिष्ठितम् इति । एतत् श्रुत्वा शाकल्यः प्राह हे याज्ञवल्क्य एवमेवेतत यत् भवता कथितं कुमारदृष्टान्तेन कार्येणान्वयत् हृदयाधिष्ठानत्वं रेतसस्तत् एवमेव सर्वं सत्यमेव । लोकाः शास्त्रज्ञाश्चापि सत्यमेवमेव वदन्तीति ।।२२।।

पुनः शाकल्यः पृच्छति ।

( किं देवतोऽस्यामुदीच्यामित्यादि ) हे याज्ञवल्क्य यस्यामुदीच्यां दिशि त्वमवस्थितस्तस्या दिशः काऽधिष्ठातृदेवतेति । उत्तरयति ।

प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येव-मेवैतद्याज्ञवल्क्य ॥२३॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥२४॥

(सोमदेवत इत्यादि) तस्या अधिष्ठातृदेवः क इति प्रश्नः उत्तर-यति सोम इति। पुनः प्रश्नयति सोमः कस्मिन् प्रतिष्ठित इति। दीक्षायामिति होत्तरम्। दीक्षा कुत्र प्रतिष्ठितेति प्रश्नः सत्ये दीक्षा प्रति-ष्ठितेत्युत्तरम्। यतो दीक्षा सत्ये प्रतिष्ठिताऽतो यज्ञादौ दीक्षितं पुरुषमा-चार्याहुः कथयन्ति यत् त्वं सत्यमेव वद नानृतं कदाचिदपीत्यतो दीक्षा-सत्ये प्रतिष्ठितेति। सत्यं कुत्र प्रतिष्ठितमिति प्रश्ने हृदये इत्युत्तरम् एतदेवोपपादयति।

(हृदयेन हीत्यादि) यतो हृदये सत्यं प्रतिष्ठितमतो हृदयेन सत्यं विजानाति तस्मात्सत्यं हृदये प्रतिष्ठितमिति। एतत् श्रुत्वा शाकल्यः कथयति हे याज्ञवल्क्य एवमेवैतदिति ॥२३॥

पुनः प्रश्नयति (किं देवतोऽस्यां ध्रुवायामित्यादि) हे याज्ञवल्क्य अस्यां ध्रुवायां दिशि यदत्रस्थितोसि तस्या दिशोऽधिष्ठातृदेवः क इति। तत्र स्वर्लोकमपेक्ष्य भूमेर्ध्रुवत्त्वात् भूमिरुपाधो दिक् या सा ध्रुवेति कथ्यते इति प्रश्नः उत्तरयति अग्निदेवत इतीति। ध्रुवाया दिशो देवोऽग्निरेवेति। सोग्निः स्वयं कुत्र प्रतिष्ठित इति प्रश्नस्योत्तरम् वाचीति वाचि खलु अग्निः प्रतिष्ठित इति। सा वाक् कस्मिन् अधिकरणे तिष्ठतीति प्रश्नः हृदये वाक् प्रतिष्ठितेति उत्तरम्। हृदयं कस्मिन् प्रतिष्ठितमिति पृच्छति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥२४॥

**अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयांसि वैनद्विमथ्नीरन्निति ॥२५॥**

**कस्मिन्नु त्वञ्चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नु-**

एतत् हृदयमन्तःकरणं सर्वदिग्देवानां प्रतिष्ठाभूतं तादृशं हृदयं कुत्र तिष्ठतीति प्रश्नं श्रुत्वा विस्मित इव याज्ञवल्क्यः प्राह—

(अहालिक इत्यादि) हे अहालिक ! नपुंसक शाकल्य हृदयं क्व प्रतिष्ठितमिति न जानासि । एवं कोपादुक्तवान् याज्ञवल्क्यः अथवा शाकल्यस्यैव नामान्तरमहालिकेति केचन कथयन्ति । एवं शाकल्यं भर्त्सयित्वा कथयति ।

( यत्रेत्यादि ) अस्मत् अस्मात् शरीरात् यद्यन्यत्र स्थानान्तरे एतत् हृदयं वर्तते इति मन्यासै मन्यसे शरीरातिरिक्तस्थाने एतत् हृदयं प्रतिष्ठितमिति यदि त्वं मन्यसे इत्यर्थः तद्धि एतत् हृदयमस्मात् शरीरादन्यत्र स्थानान्तरं प्रतिगच्छेत् तदैतत् शरीरं निर्जीवकमिति मत्वा श्वानः कुक्कुरादयो मृतमांसभक्षाः अद्युर्भक्षयेयु र्वयांसि वा काकादयो वा एतत् हृदयरहितं शरीरं विमन्थरीरन् विलोडयेयुः इतस्ततो भूमौ परिभ्रामयिष्यन्ति । तस्मादन्यत्र हृदयं न प्रतिष्ठितं, किन्तु मय्येव हृदयं प्रतिष्ठितमिति व्यतिरेकमुखेनोत्तरमिति ॥२५॥

मय्येव हृदयं प्रतिष्ठितमिति श्रुत्वा शाकल्यः प्राह—

( कस्मिन्नु त्वं चेत्यादि ) हे याज्ञवल्क्य कस्मिन्नधिष्ठाने त्वं च आत्मा हृदयं च प्रतिष्ठितौ स्थो भवत् । हृदयाधारो जीवो हृदयं चैतद्वयं

दान: प्रतिष्ठित इति समान इति स एष नेतिनेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्य्यो नहि शीर्य्यतेऽसङ्गो न हि सज्ज्यतेऽसितो न व्यथते न रिष्यत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषा: स यस्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तं ह न मेने शाकल्यस्तस्य ह मूर्द्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमाना: ।।२६।।

कस्मिन्प्रतिष्ठितमित्यर्थ: । अत्रात्मपदं हृदयस्य बोधकमिति । उत्तरयति।

( प्राणे इति ) प्राणे तद्वयमवतिष्ठते इति प्राण एव तयोर्द्वयोरपि अधिष्ठानमिति । यतो यावत्पर्यन्तं शरीरे प्राणावस्थानं तावत्कालमेव जीवमनसोरवस्थानं भवतीति । स प्राण: कस्मिन् प्रतिष्ठित इति प्रश्नस्योत्तरमपाने प्राणस्तिष्ठतीति । अपान: क्व प्रतिष्ठितस्तदुत्तर व्याने समतिष्ठत इति । व्यान: कुत्र प्रतिष्ठत इति प्रश्ने उदाने इत्युत्तरम् । उदानस्य कुत्रावस्थितिरिति प्रश्नस्य समाने इत्युत्तरमिति । एवं प्रकारेण प्रश्नोत्तरयो: प्रवाहे जाते समानपर्यन्तं गत्वा शाकल्यस्स्तब्धोजातस्तं तथाभूतं दृष्ट्वा समानस्य प्रतिष्ठाधारं नायमसौ जानातीति विनिश्चित्य समानस्थित्याधारं स्वयमेव पृच्छति ।

( स एष इत्यादि ) स एष: समानप्रतिष्ठाधारभूत: यश्च "अथात आदेशो नेतिनेति" श्रुतौ प्रतिपादित आत्मा परमात्मा स प्रतिष्ठाधारभूत: स एव एव समानप्रतिष्ठाधारभूत: नतु तदतिरिक्त: कश्चित् ।

( अगृह्य इत्यादि ) स च समानाधारप्रतिष्ठाभूत: स यतश्चक्षुरादिना अगृह्यो गृहीतुमयोग्यो रूपाद्यभावात् रूपादिमदेव वस्तु चक्षुषा गृहीतं तद्रहितत्वान्नायं चक्षुर्ग्रहणयोग्यो न हि गृह्यते इन्द्रियग्राह्यो न भवतीति

तथाऽशीर्यो नहि शीर्यते यन्मूर्तं संहतमवयवविशिष्टं तत् शीर्यते विनश्यति यथा घटादिः। अयन्तु तद्विपरीतस्वभाववत्त्वात् न शीर्यते कदाचिदपि विनष्टो न भवति। तथा "असंगो न हि सज्जते"। एकं मूर्तं मूर्तान्तरेण सम्बन्धमाददत् सक्तं भवति अयन्तु तद्विपरीतो न सज्जते सज्जो न भवति निर्लेपत्वात् पापफलं नानुभवति परमात्मेत्यर्थः। तथा असितो न व्यथते न रिष्यति। तत्रासितोऽबद्धः यो हि मूर्तपदार्थः स बद्धो भवति अयं तु तद्विपरीतस्वभावत्त्वात् न व्यथते दुःखी न भवति कर्मबन्धरहितत्वात् अत एव न रिष्यते न विनश्यतीत्यर्थः। ईदृशसमानप्रनिस्ठाधारभूतं मनसि कृत्वाऽवश्यमेतं शाकल्यो न जानाति इति विनिश्चित्य पृच्छति शाकल्यं याज्ञवल्क्यः।

( एतानीत्यादि ) एतानि यानि पूर्वं कथितानि अष्टावायतनानि पृथिव्यादिकानि पृथिव्येव यस्यायतनानीत्यादिप्रकरणेन। तथा अष्टौ लोका अग्निप्रमुखा पूर्वं कथिताः अष्टौ देवा अमृतमिति होवाचेत्यादिना शारीराद्या अष्टौ पुरुषाः सर्वः कश्चित्तान् पुरुषान् शारीरप्रभृतिकान् निरुह्य निश्चयेनोह्य हं कृत्वा प्रत्युह्य सम्यग् निर्धारणाय क्रियमाण ऊहः प्रत्यूहः। आयतनदेवलोकपुरुषान्प्रति स्वकीयतर्केण तेषां तेषां स्वरूपं, निर्णीय तान् सर्वान् पृथिव्यादिकान् अत्यक्रामत् यः पुरुषः प्रत्यक्रामत्। सकलजन्यवर्गभिन्नत्वेन निश्चयमकरोत् यद्यपि अतिक्रमणक्रियां प्रति कर्तृत्वं यत् तत्तु परमात्मनिष्ठम् ऊहकर्तृत्वं च पुरुषगतमसमानकर्तृकत्वाभावानिरुह्यातिक्रमणं कथं संगच्छते तथापि णिजर्थव्यापारमादाय ऊहयित्वाऽत्यक्रामदित्युक्तौ न कोपि विरोध इति। तं तादृशं सर्वविलक्षणम् औपनिषदम् उपनिषत्प्रमाणमात्रेणैवाधिगतम् त्वा त्वां पृच्छामि त्वं चेत् यदि त्वम् तमात्मानं मे मह्यं न विवक्ष्यसि न कथयिष्यसि तदा ते तव मूर्धा शिरो व्यपतिष्यति। इति इत्येवं क्रमेण याज्ञवल्क्यस्तं शाकल्यं शशापेति। ततः शाकल्यस्तमौपनिषदमुपनिषन्मात्रप्रमाणगम्यं परमात्मानं न मेने न

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान्वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ।।२७।।**

ज्ञातवानित्यर्थः । तस्यैह मूर्धा शिरः निपपात कबन्धात् पृथगिवाभूत् मृत इत्यर्थः । न केवलं मृत एवापि तु तस्य संस्काराय नीयमानस्य अन्यत् धनमिति मन्यमानाः मत्वा चौरास्थीन्यपि अपजह्रुरपहृतवन्तः । अथवा परिमोषिणो मुषितशरीरस्य नष्टशरीरस्येत्यर्थः अस्थीन्नेव अन्यन्तमन्यमानाः पुत्रादयः औध्र्वदैहिकक्रियायै अपहृतवन्त इति ।।२६।।

शाकल्यस्य विपन्नानन्तरं याज्ञवल्क्यो ब्राह्मणान् संबोध्य कथयतीत्यत आह—

(अथ होवाच ब्राह्मणा इत्यादि) अथ शाकल्यप्रकरणानन्तरम् भगवन्तः पूजनीया ब्राह्मणा विद्वांस इत्येव मत्वा शिष्टान् ब्राह्मणान् संबोध्य याज्ञवल्क्य उवाच प्रोक्तवान् । किमुक्तवान् तत्राह—

( यो व इत्यादि ) वो युस्माकं मध्ये यः कामयते प्रश्नं कर्तुमिच्छति स प्रष्टुकामो मा मां पृच्छतु । सर्वे वा ब्राह्मणा मिलित्वा मा मां पृच्छत । यो वः कामयते तमेकमहं पृच्छामि वा सर्वानिवाहं पृच्छामि । यद्वा युष्माकं मध्ये यः प्रत्युत्तरं दातुमिच्छति तमहं पृच्छामि सर्वान् वा अहं प्रच्छामीति । एवमुक्तवति याज्ञवल्क्ये ते समेता ब्राह्मणा विद्वांसः न दधृषुः । कथायां प्रत्युत्तरदानाय समर्थाः न बभूवुः, याज्ञवल्क्यभयेन जल्पकथायां समर्था नाभवन् तूष्णीं भूत्वा अभञ्जिति ।।२७।।

( तानित्यादि ) ततस्तूष्णींभूतान् तान् ब्राह्मणानुद्दिश्य एतैर्वक्ष्यमाणश्लोकैर्याज्ञवल्क्यः पप्रच्छ पृष्टवान् । किं पृष्टवान् तत्राह—

तान् हैतैः श्लोकैः पप्रच्छ ।

यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।

तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥१॥

त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः ।

तस्मात्तदा तृण्णात्प्रैति रसो वृक्षादिवाहतात् ॥२॥

मांसान्यस्य शकराणि किनाटं स्नावतत्स्थिरम् ।

(यथेत्यादि) यथा येन प्रकारेण वनस्पतिः फलपुष्पसमन्वितो वृक्ष-आम्रादिः तथैव तेनैव प्रकारेण पुरुषोपि मनुष्यादिदेहावस्थितो जीवोपि अमृषा सत्यम् । तस्य पुरुषलक्षणवृक्षस्य लोमानि क्षुद्रकेशा एव पर्णानि पर्णस्थानापन्नानि । यथा वृक्षः पर्णैर्निवारितातपो भवति तथा पुरुषोपि लोमभिर्निवारितातपो भवति । त्वगस्योत्पाटिका बहिः अस्य पुरुषस्य त्वक् । वृक्षस्यै चोत्पाटिका नीरसा या त्वक् सा उत्पाटिकेत्यर्थः । पुरुषस्य रुधिरस्रावनिवारणाय त्वक् बहिर्वनस्पतेश्च तत्स्थाने उत्पाटिका उत्पाटचते वृक्षात् पृथगपि क्रियते इत्युत्पाटिकशुष्कप्राया त्वगित्यर्थः ॥१॥

(त्वच एवास्येत्यादि) अस्य पुरुषस्य त्वच एव सकाशात् रुधिरं शोणितं प्रस्यन्दि क्षरति । वृक्षस्य तु त्वचः सकाशात् उत्पटो वृक्षनिर्यासः प्रस्यन्दते ॥ यस्मादेवं तस्मात् आतृण्णात् छिन्नात् देहात् रुधिरं शोणितं प्रैति निर्गच्छति । आहतात् छिन्नात् वृक्षात् रसो निर्गच्छति । यथा छिन्न-वृक्षात् रसनिःसरणं तद्वत् हिंसितपुरुषात् रुधिरं निर्गच्छतीति वृक्षपुरुषयोः स्तुल्यत्वमिति ॥२॥

(मांसान्यस्येयादि) अस्य पुरुषस्य मांसानि भवन्ति देहे वृक्षस्य शकराणि तत्स्थाने पुरुषस्य मांसानीत्यर्थः । शकराणि सकलानि । यथा वृक्षस्य शकराणि तत्स्थाने पुरुषस्य मांसानीत्यर्थः । शकराणि सकलानि । यथा वृक्षस्य शकलेभ्योऽन्तरं काष्ठसंलग्नं त्वगपे-किनाट वृक्षस्य । तत्वल्कललक्षणं

**अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ।।३।।**
**यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ।**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ।।४।।**
**रेतस इति मावोचत जीवतस्तत्प्रजायते ।**

क्षया विरलं सूक्ष्मवस्त्रवत् शुक्लं भवति । तत्स्थाने पुरुषस्य स्नाव । स्नावन् इति नान्तोयं शब्दः तत् किनाटं स्नावदतिदृढं भवति । अन्तरतः स्नावोऽन्तरतोमध्येऽस्थीनि भवन्ति पुरुषस्य । तथा वृक्षस्य किनाटस्याभ्यन्तरतो दारूणि काष्ठानि भवन्ति । मज्जा मज्जोपमेति मज्जा पुरुषस्य वृक्षस्य च समानैव । यथा वृक्षस्य मज्जा तथा पुरुषस्यापि मज्जा । यथा पुरुषस्य तथा वनस्पतेरपीति ।।३।।

(यद्वृक्षेत्यादि) वृक्षात् पुरुषस्य साधर्म्यं दर्शयित्वा सम्प्रति वैधर्म्यमिव किंचिद्दर्शयति ।

(यदित्यादि) वृक्णः परश्वादिना छेदितशादवो वृक्षः पुनर्मूलात् नवतरः पूर्वस्मादभिनवतरः प्ररोहति पुनरपि प्रादुर्भवति । वृक्षसामान्ये एवं दृश्यते यत् शाखादीनामुच्छेदेपि पुनः प्ररोहणम् वदरीवृक्षादौ तु कर्तने कृते पुनः संपूर्णस्य पूर्ववृक्षापेक्षयाऽभिनवतरस्य वृक्षस्य प्ररोहणं भवति । एतद्विशेषणात् पूर्वं वृक्षस्य पुरुषस्य सर्वात्मना साधर्म्यं दर्शितम् । अयन्तु वृक्षे वैलक्षण्यं दृश्यते यच्छिन्नस्यापि वृक्षविशेषस्य प्ररोहणं भवति पुरुषे मृत्युना वृक्णे पुनः प्ररोहणं पुरुषस्य न भवति । ततश्च मृत्युना वृक्णो मारितः कस्मान्मूलात्प्ररोहति पूर्वसाधर्म्यदर्शनात् अवश्यं पुरुषस्यापि प्ररोहणं कुतश्चिदवश्यमेव भवितव्यम् तस्मात्तद् युष्मान् पृच्छामि तत् कथयत मृतस्य पुरुषस्य प्ररोहणं कुत इति ।।४।।

(रेतस इत्यादि) यदि भवन्त एवं कथयन्ति यत् रेतसो वीर्यात् पुरुषस्य

**धानारुह इव वै वृक्षोऽञ्जसा प्रेत्यसम्भवः ॥५॥**
**यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् ।**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहिति ॥६॥**

मृतस्यापि पुनः प्ररोहणं भवतीति तन्न वक्तव्यम् । यस्मात् जीवत एव पुरुषात् रेतः प्रजायते समुत्पद्यते न तु मृतात्पुरुषात् रेतस उत्पत्तिर्भवति तत्कथं रेतसः सकाशात् पुरुषस्य पुनः प्ररोहणं स्यादिति । किंच वृक्षो धाना रुहो बीजादपि जायमानो भवति न केवलं काण्डादेव जायते । धानारुह इव इत्यत्र इव शब्दो न सादृश्यार्थकोऽपितु अप्यर्थको ज्ञातव्यस्त-तश्चोपर्युक्तार्थो भवति । अञ्जसा प्रेत्य मृत्वासंभवः धानातोऽपि प्रेत्य संभवो भवतीति भावः ॥ ५ ॥

(यत्समूलमित्यादि) यत् यदि समूलं मूलसहितं मूलेन धानया बीजेन वा सहावृहेयुरुत्पाटयेयुर्मूलसहितं वृक्षं यदि कदाचित् विनाशयेत् तदा वृक्षं न पुनराभवेत् पुनरागत्य वृक्षं न भवेत् तस्माद् भवन्तं पृच्छामि यत् मूलं किमिति । तदेव दर्शयति मर्त्यो मरणधर्मा पुरुषः मृत्युना मारकेण वृक्णो नाशितः सन् कस्मान् मूलात्कारणात्पुनः प्ररोहति जायते इति ।६।

ननु यः समुत्पद्य मृत्युना हतः स तु हत एव तस्य पुनर्जन्म न भवति तदा मूलस्यान्वेषणं निरर्थकं यस्तु पुनर्जायते स पूर्वापेक्षयाऽतिरिक्त एव जायतेऽतोवृक्णस्य पुनर्जन्मकारणप्रश्नस्तव निरर्थक एवेत्याशंकायामाह–

जात एव न जायते कोऽन्वेनं जनयेत्पुनः ।
विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विद इति ।।७।।२८।।

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य
नवमं ब्राह्मणम् ।।९।।

इति बृहदारण्यकोपनिषत्सु तृतीयाऽध्यायः ।।३।।

(जात एवेत्यादि) यदि मृतस्य पुरुषस्य पुनर्जन्म स्यात् तदा कृतनाशाकृताभ्यागमप्रसंगरूपो दोषः स्यात् "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चे" ति स्मरणात् । अतो मृतस्य पुरुषस्य पुनरपि जन्म भवति आतत्वज्ञानमिति सिद्धम् । अतो युष्मान् पृच्छामि क एनं मृतं पुरुषं पुनर्जनयेत् उत्पादयेत् । ततः संसारस्य मूलकारणं किमिति प्रश्नो याज्ञवल्क्यस्य, ततो जगतो मूलकारणं ब्रह्मेति ब्राह्मणैर्विद्वद्भिरपि न ज्ञातं ततो याज्ञवल्क्येन ते ब्राह्मणाः जिता इति आख्यायिका समाप्ता । इतोऽनन्तरं याज्ञवल्क्येन जगतो यन्मूलकारणं पृष्टं तत् अनुग्रहबुद्ध्या श्रुतिः स्वयमेव दर्शयति

( विज्ञानमानन्दमित्यादि ) तत् जगतो मूलकारण ब्रह्म विज्ञानं विज्ञप्तिस्वभावकम् आनन्दम् निरतिशयनिरूपाधिकसुखरूपम् तद् ब्रह्म रातेः रातिर्धनम् । तस्य धनस्य दातुर्दानशीलस्य कर्मकृतो यजमानस्य परायणं परमा गतिस्तथा तिष्ठमानस्य ब्रह्मपरायणस्य ब्रह्मसंस्थस्येत्यर्थः तद्विदो ब्रह्मविदः परायणं परमं प्राप्यम् एतादृशं विज्ञानानन्दरूपं ब्रह्म साकेताधिपतिर्भगवान् राम एव सर्वस्य चराचरात्मकजगतः परममूलमेतदेव ब्रह्म याज्ञवल्क्येन पृष्टं तद्ब्राह्मणैर्नाविगतमिति भावः ।।७।२८।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
नवमं ब्राह्मणम् ।।९।।

## चतुर्थाध्याये प्रथमं ब्राह्मणम्

**जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज तं होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानीत्युभयमेव सम्राडिति होवाच ॥१॥**

**यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलनिर्वाग्वै**

विज्ञानमानन्दं ब्रह्मेति वाक्येन जगत उत्पत्त्यादिकारणभूतं परमात्मानं साक्षादेव निरूप्य वागादिदेवताद्वारेण परम्परयापि तदधिगमः कर्तव्य इत्यधिगमोपायप्रदर्शनाय ब्राह्मणमारभ्यते ।

(ओं जनको ह वैदेह इत्यादि) जनको विदेहो विदेहे मिथिलायां भवो वैदेहो विगतदेहाभिमानः आसाञ्चक्रे सभायां स्थितोऽभवत् । लोकेभ्यो दर्शनाय सभास्थोऽभवदित्यर्थः । अथ सभायां दर्शनायस्थित्यनन्तरं तत्र याज्ञवल्क्य नामको ऋषिराववाजागतवान् । तमागतं याज्ञवल्क्यं दृष्ट्वा अर्घ्यपाद्यादिभिस्तं प्रपूज्य जनक उवाच प्रोक्तवान् । हे याज्ञवल्क्य किमर्थमचारीः । कं प्रयोजनविशेषमासाद्य आगतोसि किं पशून् गवादिकान् इच्छन् आगतोऽसि ? अथवा अण्वन्तान् । अणोः सूक्ष्मस्य प्रत्यगात्मादिवस्तुन अन्तान् निर्णयान् वा कर्तुमागतोसि तद्वद । एवं जनक वचनं श्रुत्वा याज्ञवल्क्य उवाच हे सम्राट् सार्वभौम सर्वासु आपश्चिमसमुद्रात् पूर्वसमुद्रपर्यन्तं हिमालयदारभ्य कन्याकुमारिकापर्यन्तपृथिवीषु अप्रतिहता आज्ञा विद्यते यस्य स सार्वभौमः सम्राट् । अथवा वाजपेययागानुष्ठाता राजा सम्राट् इति ॥१॥

(यत्ते इत्यादि) हे राजन् ते तुभ्यं कश्चित् ब्रह्मोपदेष्टा यदब्रवीत् प्रोक्तवान् । यतस्त्वमनेकाचार्योपसेवी । अतस्ते यदुक्तमन्येन तदहं शृणवाम श्रोतुमिच्छामि तच्छ्रुत्वा तदनन्तरं तत्र यद्युपदेष्टव्यमंशमवशिष्टं स्यात्तदहं

ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान् ब्रूयात्तथा तच्छैलिनोऽब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किंस्यादित्यब्रवीत्तु ते तस्यायतनं

मुपदेक्ष्यामीत्यर्थः । एवं याज्ञवल्क्यवचनं श्रुत्वा जनकः प्राह—

( अब्रवीन्मे इत्यादि ) जित्वा एतन्नामक आचार्यः शैलिनिः शिलिनस्यापत्यं पुमान् । वाग्वैब्रह्मेति अब्रवीत् । ब्रह्म प्रतीकतया वाच एवोपासनं विधेयमिति स मह्यमुक्तवानिति । अनुमोदयन् याज्ञवल्क्यः प्राह—

(यथेत्यादि) हे सम्राट् यथा येन प्रकारेण मातृमान् माता विद्यतेऽनुशासनकर्त्री यस्य स मातृमान् । पितृमान् पिता विद्यते अनुशासनकर्ता यस्य स पितृमान् । आचार्यवान् आचार्यो विद्यते अनुशासनकर्ता यस्य स आचार्यवान् । तत्र माता जननी । पिता उत्पादको हितोपदेष्टा आचार्य उपनयनादि संस्कारं कृत्वा वेदाध्यापकः तथोक्तम् "उपनीय गुरुः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।।" इति मनुस्मृतेः । उपनयनात्पूर्वं मातापितरौ अनुशासनं कुर्वतः, उपनयनादन्तरमाचार्यो अनुशास्ति । ततश्च यथा मात्रा पित्रा आचार्येण चानुशिष्टो वदति तथैव तुभ्यं शैलिनिराचार्यः प्रोक्तवान् वाग्वै ब्रह्मेति सम्यगेवोपदेशं स दत्तवानित्येवं याज्ञवल्क्येनानुमोदितः । वाचः कथं ब्रह्मत्व तत्रोपपत्तिं दर्शयति

(अवदतो हीत्यादि) अवदतः किंस्यादिति वाचा रहितस्य पुरुषस्य किं स्यात् न किमपीति । इह लौकिकं परलौकिकं वा किंचिदपि साध्यं मूकस्य सिद्धं न भवति मूकस्य किमपि कार्यं न सिद्ध्यतीत्यर्थः । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । परंतु हे राजन् तस्यायतनं प्रतिष्ठां किमब्रवीदिति कथय। तत्रायतनं शरीरम् प्रतिष्ठा तु कालत्रयेपि आश्रयः । एतद्द्वयविषये किमुक्तवान् शैलिनिरिति । जनकः प्राह—

**प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच वाचा वै**

(न मेऽब्रवीदिति) हे याज्ञवल्क्य स तु आयतनं प्रतिष्ठाविषये किमपि नोक्तवानिति । ततो याज्ञवल्क्यः प्राह—

(एकपाद्वेति) हे सम्राट् एतद्वाग्रूपं ब्रह्म एकपाद् । एकः पादो- यस्य तत् एकपाद् । ब्रह्म तु चतुष्पादनिर्दिष्टं शास्त्रे शैलिनिस्तु एकपाद वत एवोपदेशं दत्तवान्, पादत्रयन्तु अवशिष्टमेव । ततश्च चतुष्पादः ब्रह्मण एव साक्षात् परंपरयोपासने तदुपासनं सफलं स्यात् न तु पादत्रयशून्यैकपाद- वत् उपासनं फलाय स्यात् । एवं श्रुत्वा जनकः प्राह—

( स वै नो इत्यादि ) हे याज्ञवल्क्य स त्वं विद्वान् नोऽस्मभ्यं तदायतनं प्रतिष्ठां च ब्रूहि कथय । यत्तेन कथितं तत् त्वयैव कृपया प्रतिपादनीयमिति । याज्ञवल्क्यः प्राह—

( वागेवेत्यादि ) वागेवायतनम् वगभिमानिदेवतायामध्यस्यमानस्य ब्रह्मणो वागेवायतनं शरीरम् । आकाशः प्रतिष्ठा तत्राव्याकृताकाशः परम- व्योम वा प्रतिष्ठा वाच्यध्यस्यमानस्यब्रह्मणः प्रतिष्ठा कालत्रयेपि आश्रयः । एतद् वाग्रूपं ब्रह्म प्रज्ञा इति कृत्वोपासीतोपासनं कुर्यादिति । पुनरपि जनकः पृच्छति

( का प्रज्ञतेत्यादि ) हे याज्ञवल्क्य इयं प्रज्ञतानाम का । यथा प्रतिष्ठांशो वाचोऽभिन्ना तथा प्रज्ञापीयं वाचोऽभिन्ना भिन्ना वेति जनकस्य प्रश्नः । यथा वाचा प्रतिष्ठांशेऽभिन्न स्तथा प्रज्ञापि तदभिन्नैवेत्युत्तरयति

(वागेवेत्यादि) हे सम्राट् वागेव प्रज्ञा यथा प्रतिष्ठांशो वाचो- ऽभिन्नस्तथा प्रज्ञापि वाचोऽभिन्नैवेति । तत्रोपपत्ति [illegible] ।

ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच सम्राड्बन्धुः प्रज्ञायते ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट प्रज्ञायंते वाग्वै सम्राट् परमं

हे सम्राट् वाचैव बन्धुः प्रज्ञायते अयमस्माकं बन्धुर्बान्धवादिरिति वाणीद्वारेणैव प्रकाशितं मूकस्य तत्प्रख्यानासंभवात् । तथा ऋग्वेदादिरपि वाचैव प्रकाशितो भवति मूकेन तत्प्रकाशासम्भवात् । इष्टं नाम यागादि निमित्तकं धर्मजातं हुतं नाम अग्निहोत्रानिमित्तकं धर्म जातम्।आशितम् अन्नदानादि जनितं धर्मजातम् । पायितं प्रपादौ जलदानादिनिमित्तकं धर्मजातम् । किं बहुना इह लोकः परलोकः सर्वाणि भूतानि सर्वमपिवाणीद्वारेणैव प्रकाशितं भवति । हे सम्राट् अतः वागेव परमं ब्रह्म अतो वाग्देवब्रह्मणउपासनमवश्यं कर्तव्यमित्यर्थः । सम्प्रति वाग्देवतायां ब्रह्मोपासनायाः फलं दर्शयितुमाह—

( नैनं वाग्जहातीत्यादि ) एनं वाग्देवतायामध्यस्यमानब्रह्मोपासकं पुरुषम् वाक् अधीता ब्रह्मविद्या कथमपि न जहाति न परित्यजति । तद्विद्याया विस्मरणं कदाचिदप्यस्य न भवतीत्यर्थः। तथा सर्वाणि भूतानि एनमुपासकं वलिदानादिभिरभिरक्षन्ति पालयन्ति । देवो भूत्वा उपास्यमानवागधिष्ठातृदेवतासायुज्यं प्राप्य कर्मदेवत्वमवाप्य देवानप्येति देवान् आजानसिद्धदेवान् आप्नोति प्राप्नोति स्वाभाविकदेवभावमृतदन्तर्गतो भवतीत्यर्थः य उपासक एवं विद्वान् वाग्देवतोपासनं करोतीति ।

(हस्तिऋषभमित्यादि) एवं श्रुत्वा प्रहृष्टो जनको वैदेहस्तस्मै उपदेशकामो

**जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥२॥**

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो**

वाच प्रोक्तवान् किमुवाच तत्राह हे याज्ञवल्क्य हस्ति ऋषभं गोसहस्रं ददामि दक्षिणा रूपेण । हस्तिसदृशो ऋषभो वलीवर्दो यस्मिन् गोसहस्रे तत्ते ददामि । वलीवर्दसहितं गोसहस्रमित्यर्थः । अथवा ऋषभपदं श्रेष्ठतावाचकं तथा च हस्तिप्रवराणां सहस्रं ते दक्षिणां ददामीति जनकः प्रोक्तवानिति । एवं श्रुत्वा स याज्ञवल्क्यः प्रोवाच प्रोक्तवान् । हे जनक मे मम पिता एवममन्यत । किममन्यत नाननुशिष्य हरेत् । शिष्य सम्यगननुशिष्य तदीयं धनं न हरेत् यावत्पर्यन्तं शिष्यस्य सम्यगवबोधो न भवेत् तावत्पर्यन्तं ततो धनं दक्षिणारूपेण न गृह्णीयादेवं मे पिता मां बाधितवानतोनेदानीं दक्षिणो ग्रहीष्यामि किन्तु सम्यगनुशिष्यैव हरिष्यामि न तु ततः प्रागिति भावः ॥२॥

(यदेवते कश्चिदित्यादि) हे सम्राट् यदेवते कश्चिदाचार्योऽब्रवीत् तन्मे कथय । मे मह्यं नामत उदङ्कः शौल्बायनः शुल्वस्यापत्यं पुमान् एवमब्रवीत् । ह प्राणो ब्रह्मेति ततो याज्ञवल्क्यः प्राह यथा मातृमान् मात्रादिभिरनुशिष्टो ब्रूयात् तथैव तेऽब्रवीत् सम्यगेवोक्तवान् अनुमोदामितदीयमुपदेशत्वम् । यतः प्राणरहितस्य किमप्यैहिलौकिक पारलौकिकं वा कार्यं जातं किमपि सिद्धं न भवति परन्तु प्राणब्रह्मणः आयतनं प्रतिष्ठांच किमवोचत् नैव किंचिदब्रवीत । ततो याज्ञवल्क्यः प्राह एकपात् एतद्ब्रह्मेति

ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवोभूत्वादेवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।।३।।

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे वर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्य्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवोच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का

अनस्तस्योपासनं फलायतनंस्यात् । तर्हि त्वमेव कथय तद्द्वयम् । प्राण एवायतनं शरीरमाकाशः प्रतिष्ठाकालत्रयेप्याश्रयः एवं प्रियमिति कृत्वोपासीत् । इयं प्रियता प्राणाद्भिन्नाऽभिन्नेति प्रश्ने प्राण एव प्रियता अभेद एवोभयोः । हे सम्राट् प्राणस्यैव कामाय अयाज्यमपि याजयति लोको यस्मात्प्रतिग्रहणे दोषस्तत्सकाशादपि दक्षिणां गृह्णाति । यत्र च प्राणवधशङ्काचोरव्याघ्रादिषु ततोऽप्ययाति प्राणकामायैव । अतो हे सम्राट् प्राणोतिशयेन प्रियः स एव परब्रह्मेति भावः ।।३।।

( यदेवते कश्चिदब्रवीदित्यादि ) चतुर्थमंत्रः स च प्रथममंत्रवदेव

सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥४॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभी विपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य । श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव

व्याख्येयः । अत्रोपदेष्टा आचार्यो नामतो बर्कुः वार्ष्णः वृष्णस्यापत्यं पुमान् चक्षुर्ब्रह्मेत्युपदिष्टवान् चक्षुरभिमानी देव आदित्यः चक्षुरहितस्य किमपि कार्यं सिद्धं न भवति । चक्षुषा दृष्टं सत्यं भवति । यथा कश्चित्कमपि पृच्छति किममुमद्राक्षीस्त्वं स चेदद्राक्षमिति वदति तत्सत्यमेव भवति श्रोत्रादिना श्रुतेपि अन्यथाभावदर्शनात् । एवं च चक्षुषा परिदृष्टे यथा सत्यताप्रतीतिस्तथा प्रमाणान्तरावगते न भवति । अन्यत्सर्वं पूर्ववदेव व्याख्येयमिति ॥४॥

( यदेव ते कश्चिदब्रवीदित्यादि ) पंचममंत्रः नामतो गर्दभीविपीतः गोत्रेण भारद्वाज आचार्यः श्रोत्रं ब्रह्मेत्युपदेशः अशृण्वतो हि किं स्यादित्य पूर्ववत्गोमनोऽधीनः प्रतिरूपः पुत्रः पितुरनुरूपस्तुल्य इत्यर्थः । मनो ह्यानन्द-

सम्राडिति होवाच तस्माद्वै सम्राडपि यां कांच दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशो दिशो वै सम्राट् श्रोत्रं श्रोत्रं वै सम्राट् परमं ब्रह्म नैनं श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेह स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥५॥

यदेव ते कश्चिदब्रवोत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किंस्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत का आनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दः मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच

कारणमतो मनस आनन्द श्रोत्रदेवतादिक् "दिशः श्रोत्र भूत्वा कर्णौ प्राविशदि" ति श्रुतेः दिक् श्रोत्रयोरभेद एव । पूर्ववत् अन्यत्सर्वं प्रथममंत्रवदेवेति ॥५॥

( यदेव ते कश्चिदब्रवीत्यादि ) षष्ठमंत्रः, अत्र नाम्ना सत्यकामः जाबालो जबालाया अपत्यमाचार्यः मनो ब्रह्मेत्युपदेशः चन्द्रमा देवः आनन्दः

याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।।६।।

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्व्वेषां भूतानामायतनं हृदयं वै सम्राट् सर्व्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्म नैनं हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।।७।।

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य प्रथमं ब्राह्मणम् ।१।।

इति कृत्वोपासनम् । स्त्रियमभि । स्त्रियं प्रति मनसैव हार्यते स्त्रीसंभोगोमित्यर्थः । अन्यत्यसर्वं पूर्ववदेवेति। ।६।।

( यदेव तेऽब्रवीदित्यादि ) सप्तममंत्रः अत्र विदग्धः शाकल्य आचार्यः हृदयं ब्रह्मेतित्युपदेशः, देवता प्रजापतिः यतः सर्वाणि भूतानि हृदये एव प्रतिष्ठितानि भवन्ति । तस्मात्हृदयं स्थितिरिति स्थितिरूपेणोपासने कुर्यादिति अन्यत्सर्वं प्रथममंत्रवदेवेति ।।७।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य

प्रथमं ब्राह्मणं समाप्तम् ।।१।।

## चतुर्थाध्याये द्वितीयं ब्राह्मणम्

**जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्य अनु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मा-**

जनको राजा याज्ञवल्क्यस्य ज्ञानविशेषातिशयमनुमीय ततो ज्ञानप्राप्तये तमनुप्रसादेति शुश्रूषादक्षिणयोर्ज्ञानप्राप्तौ कारणतां दर्शयितुं द्वितीयं ब्राह्मणमवतारयति ।

(जनको ह वैदेह इत्यादि) नाम्ना जनको विदेहाधिपतिस्तद्देशोद्भवो विगतदेहाभिमानो भगवदाराधनैकपरः कूर्चादासनविशेषात् सिंहासनादित्यर्थः उत्थाय उपावसर्पन् उपावसीदन् गुरूपसदनप्रकारेणाचार्यसमीपं प्राप्य उवाचोक्तवान् । किमुवाच तत्राह—

( नमस्तेस्तु इत्यादि ) हे याज्ञवल्क्य विद्यागुरो ते तुभ्यं नमोस्तु नमस्करोमि भवन्तम् । अनु मा मां शाधीति, शिष्योहं तेऽतो मामुपदिश उपसन्नाय शिष्यायावश्यमेवोपदेष्टव्यं तत्र विलम्बोऽन्यथावा न करणीय इति भावः । एवं शिष्यप्रार्थनानन्तरं याज्ञवल्क्यः प्राह—

( स होवाचेत्यादि ) स ह याज्ञवल्क्यः प्रोवाच । हे सम्राट् जनक, यथा येन प्रकारेण लोकः महान्तमतिदूरमध्वानं मार्गम् एष्यन् गमिष्यन् । भूमिसम्बन्धिनं समुद्रसम्बन्धिनं वा मार्गं गन्तुमिच्छन् गमनसाधनम् रथं वा नावं नौकां वा समाददीत भौमं मार्गमतिक्रमितुं रथादिसाधनमात्मसात्करोति सामुद्रं वा मार्गमतिक्रमयितुं नौकादिसाधनमात्मसात् करोति । एवं तथैव परलोकगमनाय त्वमपि एताभिराचार्योपदिष्टोपनिषद्भिः समाहितात्मासि समाप्तपरलोकसाधनोसि परलोकगमनसाधनेसत्त्वं प्रतिपादयति तेन यद्यपि त्वं युक्तोसि तथापि ते प्रकारं पृच्छामि

ऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ व तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥१॥

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं

यदि जानासि तदावदनो चेत् तदा कथयिष्यामीति। एवं वृन्दारकः राजत्वेन पूज्यमान आढ्यो धनादिनायुक्तः अधीतवेदः स्वाध्यायाध्ययनयुक्तो गुरुभिरुक्तोपनिषत्कश्चाप्यसि। सर्वपुरुषार्थसम्पत्तिमानसि। एतादृशो-भवान्। इतोऽस्मात् संसारप्रयोजकात् शरीरात् देहेन्द्रियादिसमुदायात् विमुच्यमानः पृथग्भवन् क्व गमिष्यसि। कं मार्गविशेषमासाद्य परलोकं गन्तासीति प्रश्नः।

( नाहमित्यादि ) हे भगवन् तत् अध्वानमहं न वेद। येन पथा उत्क्रामत् ब्रह्मवित् याति तमध्वानं न जानामि। यत्र येन पथा गमिष्यामि। ततो याज्ञवल्क्यः प्राह—

( अथ वै ते इत्यादि ) हे जनक यत्र येन मार्गेण त्वमन्यो वा ब्रह्म-विदुत्क्रामन् त्वं गमिष्यसि तत्पन्थानं तेऽहं वक्ष्यामि कथयामि। ततो जनकः प्राह भगवान् तन्मे ब्रवीतु कथयतु यदि मामनुग्रहीतुमिच्छसि चेदिति। यथोपकोशलविद्याप्रकरणे मात्रगतिप्रश्नोपिगन्तव्यब्रह्मणो विज्ञापकस्त-द्वत् प्रकृतप्रकरणेपि प्रश्नोधिकस्य संग्राहकः अतो द्वयोरपि उत्तरप्रति-वचनमुपपन्नं भवतीति ॥१॥

( इन्धो हेत्यादि ) यः खलु अयं परिदृश्यमानो दक्षिणेऽक्षन् दक्षिणे अक्षिणि दक्षिणनेत्रे इत्यर्थः यः पुरुषः पुरुषाकारः स एष इन्धो ह वै नाम, इन्ध-नामकः पुरुषः स च दक्षिणनेत्रे व्यवस्थित इति। तमेतमिन्धम् इन्द्रेतिनाम्ना आचक्षते। प्रत्यक्षन्तु तस्य नाम इन्ध इति किन्तु इन्धेति संज्ञां परित्यज्य

**सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥२॥**

**अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयो-**

परोक्षत इन्द्रेतिनाम्ना व्यपदिष्टो भवति । प्रत्यक्षत इन्धनाम्ना व्यपदेशमकृत्वा परोक्षेणेन्द्रनाम्ना व्यपदेशे किं कारणं तत्राह

(परोक्षप्रिया इत्यादि) हि यस्मात् कारणात् देवाः परोक्षप्रिया इव भवन्ति । न केवलं परोक्षप्रिया एव प्रत्युत प्रत्यक्षद्विषोपि भवन्ति देवाः प्रायो गोपनीयादिकमर्थजातं पर्यायशब्देनैव वदन्ति न तु स्पष्टरूपेण कथयन्ति । प्रत्यक्षेण कथने द्वेषं कुर्वन्ति पर्यायतः कथनेन प्रीतिमन्तो भवन्ति । यथा इदानींतना अपि बहवः स्वं महान्तं मन्यमानाः प्रत्यक्षनामग्रहणेन व्यपदेशं कुर्वाणं द्विषन्ति परोक्षनामग्रहणपूर्वकव्यवहारं कुर्वन्तं प्रति समादरयुक्ता भवन्ति । तस्मादेनमेवेन्धमिन्द्र इति नाम्ना व्यपदेशो भवति । "य एष एतस्मिन्मण्डले पुरुष" इति श्रुतौ यः स एव "यो यं दक्षिणेऽक्षन् पुरुष इति श्रुतावपीति उभयोरैक्यम् आदित्यमण्डलस्थस्य पुण्डरीकाक्षत्वादिधर्मश्रवणेनेन्द्रत्वं व्यवस्थितम् । तथा "परमे-व्योमन्" "इन्द्रो मायाभिः" इत्यादि श्रुतिषु परमपुरुषस्य साकेताधिपतेरेवेन्द्रशब्दवाच्यत्वं प्रसिद्धमिति । अत्रापि दक्षिणनेत्रगतः पुरुषो भगवान् साकेताधिपतिरेवेति ॥२॥

(अथैतद्वाम इत्यादि) अथास्येन्धपर्यायेन्द्रस्य एषा पत्नी या वामेऽक्षणि वामनेत्रे पुरुषरूपं पुरुषाकारं अवस्थितम् । वामनेत्रे पुरुषाकारा विद्यमाना या एषैवेन्द्रस्य भोग्यत्वात् पत्नी साक्षात् लक्ष्मीः सीतैव । सा

**रेषा सृतिः सञ्चरणीयैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता**

विराट् बृहती श्रीः । इन्द्रपत्न्याः श्रीशब्दवाच्यत्वात् । तयोरेव दम्पत्यो वामनेत्रस्थदक्षिणनेत्रस्थयोः एष संस्तावो वक्ष्यमाणकान्तसंभोगस्थानम् । य एषोऽन्तर्हृदये हृदयकमलमध्ये आकाशः स एवेति । अथैनयोरिन्द्रेन्द्राण्यो रुभयोरेतत् अन्नम् अदनीयम् भोग्य महाप्रसादादिवत् । किं तत् अन्नमदनीयमत्र तत्राह य एषोऽन्तर्हृदये हृदयमध्ये लोहितपिंडः कमलकुड्मलाकारो मांसखण्डः किं चाथैनयोरेव दम्पत्योः शयनं कुर्व ोरेतत् प्रावरणम् उत्तमवस्त्रम् किंतत्तत्राह यदेतत् अन्तर्हृदये हृदयमध्ये जालकमिव दृश्यते लूताजालसदृशं वक्ष्यमाणहितानामकनाडीसमुदायसम्पन्नं जालकं तदेव दम्पत्योरुत्तमं कौशेयवस्त्रमिति । अथैनयोरिन्द्रेन्द्राण्योर्दम्पत्योरेषा वक्ष्यमाणा या नाडी । सा एतयोः संसृतिः मार्गः संचरणी । येन मार्गेण तौ दम्पती गच्छतो ब्रह्मलोकपर्यन्तम् । साकानाया ब्रह्मलोकपर्यन्तं गमयति तत्राह–

( या हृदये इत्यादि ) या नाडी हृदयात् हृदयप्रदेशात् ऊर्ध्वाः ऊर्ध्वभागावस्थितोर्ध्वमुखेत्यर्थः व्युच्चरति विशेषत उच्चरति । सा नाडी दम्पत्योः संचरणी ब्रह्मलोकगमनकारणीभूता सृतिर्मार्गः एतामेवनाडीमवलम्ब्य ब्रह्मप्राप्तये उत्क्रामति ब्रह्मविदित्यर्थः । सा नाडी अतिसूक्ष्मेति दृष्टान्तद्वारेण दर्शयलि ।

( यथा केशा इत्यादि ) यथा केशः सूक्ष्मः सहस्रधाभिन्नोतिसूक्ष्मोभवति । केशस्तु स्वयमेव सूक्ष्मः परन्तु यदि सहस्रभागः क्रियते तदा अतिशयेन सूक्ष्मो भवति यत्नतोपि उपलब्धये न भवति, एवमेव तथैव हिता नाड्यः अस्य देहस्य सम्बन्धिन्यः अन्तर्हृदये हृदयाभ्यन्तर्मांसखण्डे प्रतिष्ठिताः स्थिता भवन्ति । एताभिरेव नाडीभिर्जीव एवंभूतजातमात्र-

**भवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥३॥**

**तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्द्ध्वाः**

वति संसरति । हृदयमध्यप्रतिष्ठितकेशसहस्रभागोपमितातिसूक्ष्महितानामक-नाडीभिर्द्वारेणैतज्जीवजातमास्रवतीति भावः

( तस्मादेष इत्यादि ) यस्मात्कारणात् एषो दक्षिणनेत्रावस्थितः पुरुषः शरीरगुणादिद्वारेण दीप्यमानत्वात् इन्ध इन्द्रो भवति । तस्मादस्मात् शरीरभूतात् जीवात्मनो दाक्षेणनेत्रस्थित एष पुरुषः प्रविविक्ताहारतर इव-भवति अतिप्रकृष्टान्नवत्, तद्भोग्यो भवतीत्यर्थः । मंत्रेस्मिन् सृतिः संचरणीति कथनेन ब्रह्मलोकगमनमार्गः कथितो भवतीति ॥३॥

दक्षिणनेत्रावस्थितस्य प्रकृतस्य परमेश्वरस्य शरीरवर्ति जीवापेक्षया-वैलक्षण्यम् प्रकारान्तरेणापि दर्शयितुमाह—

(तस्य प्राची दिगित्यादि) तस्य प्राचीदिक् पूर्वा दिगेव प्राञ्चः पूर्व-दिगवस्थिताः प्राणाः एवं दक्षिणादिष्वपि अयं जीवः सर्वस्यां दिशि प्राणेन्द्रियबहुलतया प्राणेन्द्रियाद्युपकरवानिति । एवं प्रकारेण जीवस्य स्वरूपं प्रदर्श्य परमेश्वरस्य जीववैलक्षण्यं दर्शयति ।

( स एष नेतीत्यादि ) स एष दक्षिणनेत्रेऽवस्थितः परमेश्वरः पुरुषः नेति नेतिपदबोध्य इतरविलक्षणः रूपादिरहितत्वेनागृह्यः चक्षुरादिना न गृह्यते गृहीतो न भवति अशीर्यो निरवयवत्वात् न शीर्यते विकीर्णो-न भवति । असंगः कुत्रचित् केनचित् सक्तो न भवति । असितो न व्यथते शस्त्रादिना व्यथां न प्राप्नोति न रिष्यति हिंसितो न भवति । इत्थमि-

**दिगूदर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्य्यो नहि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्यः स होवाच जनको वैदेहोऽभयन्त्वागच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मी ३ इति ॥४॥**

**इति बृहदारण्यकोपनिषद चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥**

तरविलक्षणत्वेन व्यवस्थित आत्मस्वरूपः। हे जनक ! अभयं भयरहितं परमेश्वरं प्राप्तोसि प्राप्तवानसि मत्तो ज्ञातवानसि। अत एतादृशं परमेश्वरमुपास्व तदुपासनं कुरु। एवं प्रकारेण याज्ञवल्क्यं प्रोक्तवानिति। एवं याज्ञवल्क्यप्रतिबोधितो वैदेहो जनक उवाच हे याज्ञवल्क्य ! अभयं त्वदुक्तमभयम् आगच्छतात्। मे ब्रह्मप्राप्तिर्भूयात्। यो यस्त्वं भगवन् पूजार्हं नोऽस्मभ्यम् अभयमभयस्वभावक ब्रह्म वेदयसे लम्भयसे। महच्च ब्रह्मप्रापकाय भवते नमोऽस्तु नमस्कारो भवतु इमे विदेहा विदेहदेशाः तुभ्यं दक्षिणारूपेण समर्पिताः अयमहं विदेहदेशाधिपो जनकस्तवदासोहमस्मि तव दासभावमागतः। अतो यथेष्टं मां च राज्यं च प्रतिपद्यस्व। जनकस्याभयप्राप्त्यनन्तरं महानानन्दो जात इति तुष्टः स याज्ञवल्क्याय राज्यमात्मानं च दक्षिणारूपेण दत्तवानिति भावः ॥४॥

इति बृहदारण्यको॰निषदि आनन्दभाष्ये चतुर्थाध्यायस्य

द्वितीयं ब्राह्मणं समाप्तम् ॥४॥२॥

सामान्यतो ज्ञातमात्मानं स्वप्नादिद्वारेण विशेषतोऽधिगमाय तृतीयं ब्राह्मणमारभमाणः विद्यास्तुतये जनकयाज्ञवल्क्यसम्वादं दर्शयितुमुपक्रमते।

**जनकं ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे स मुदा ते तस्मै ह याज्ञवल्क्य वरं ददौ स ह कामप्रश्नमेव वव्रे तं हास्मै ददौ तं सम्राडेव पूर्वं पप्रच्छ ।।१।।**

( जनकं ह वैदेहमित्यादि ) कस्मिंश्चित् समये याज्ञवल्क्यो मुनिः 'योगक्षेमार्थमीश्वरसमीपं गच्छेदि'ति स्मृतिं स्मरन् जनकं वैदेहं प्रति जगाम गतवान् । राजसमीपे गमनेन मे योगक्षेमपालनं स्यादिति विचार्य्य जनकसमीपं गतवान् कदाचिद् याज्ञवल्क्य इति भावः । स याज्ञवल्क्यो गच्छन् मार्गे एवं मेने विचारितवान् यदहं राजानमध्यात्मविषये न वदिष्ये न किमपि वक्ष्यामि । एकदाहं गतवान् राजसमीपे तदा तत्र ब्राह्मणैः सह संवादे शाकल्यस्य शिरश्छिन्नमतोहमिदानीमध्यात्मविषये न किमप्युपदेक्ष्यामि केवलं योगक्षेमप्रश्नमेव निराकरिष्यामीति । एवं यथोक्तक्रमेण मनसा कृतसंकल्पोपि मुनिर्जनकेन यत् यत् पृष्टं तत्सर्वमुत्तरितवानित्याख्यायिकामाचष्टे ।

( अथ हेत्यादि ) अथ जनकसमीपगमनानन्तरं जनकेनार्घ्यादिना पूजितो याज्ञवल्क्यः जनकश्च राजा वैदेहो अग्निहोत्रे अग्निहोत्रहोमविषये समूदाते परस्पर संवादं प्रश्नोत्तरलक्षणं कृतवन्तावविति । तस्मै जनकाय याज्ञवल्क्यो मुनिर्वरं ददौ । कर्मविषयकं जनकस्य ज्ञानवैशद्य दृष्ट्वा न वदिष्ये इत्येवं कृतनिश्चयोपि मुनिः स्वकीयं निश्चयं विस्मरन्निव तस्मै वरं दत्तवानिति भावः । मुनिं प्रसन्नमुपलक्ष्य स ह जनकः कामप्रश्नमेवापेक्षितांशप्रश्नमेव वरं वव्रे कृतवान्स्वकीयप्रश्नविषयकमेव वरं प्रार्थयामासेत्यर्थः । तं च वरं ह अस्मै जनकाय याज्ञवल्क्यो ददौ तत्प्रार्थनां स्वीकृतवानित्यर्थः । त याज्ञवल्क्यं तूष्णींस्थितं पूर्वं सम्राट् राजैव पप्रच्छ । वरप्रदानसामर्थ्यादनाचिख्यासुमपि याज्ञवल्क्यं तूष्णीं स्थितमपि पूर्वं वैदेह एव प्रश्नं कृतवानिति भाव ।।१।।

**याज्ञवल्क्य किंज्योतिरयं पुरुष इति आदित्यज्योतिः सम्राडिति होवाचाऽऽदित्येनैव ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते**

हे याज्ञवल्क्येत्येवं क्रमेण संबोध्य जनक उवाच किं ज्योतिरयं पुरुष इति अस्य पुरुषस्य ज्योतिः प्रकाशे येन ज्योतिषा व्यवहारो भवति । सोयं किं ज्योतिरिति पृच्छति । अयं पुरुषः स्वात्रयवसमुदाव्यतिरिक्तेन ज्योतिषा व्यवहरति अथवा स्वावयवसमुदायमध्यवर्तिनैव ज्योतिषा ज्योतिः-कार्यं सम्पादयतीत्यभिप्रायेण पृच्छति किं ज्योतिरयं पुरुष इति । अस्य पुरुषस्य शयनगमनादिकं सर्वकर्मसाधनं ज्योतिः किमिति प्रश्नार्थं इति भावः । एव जनकप्रश्नं श्रुत्वोत्तरयति ।

( आदित्येत्यादि ) हे सम्राट् जनक अयं पुरुष आदित्यज्योतिः । आदित्यो ज्योतिः कर्मसाधनं यस्य स आदित्यज्योतिरिति । यं प्रकाशविशेषमादायैव प्राणिनां शयनासनगमनागमनविहारादि सर्वं कर्म संपद्यते यदभावे च कर्मलोप इव भवति, तादृशं ज्योतिः किमिति भावः । एतदेव श्रुतिः स्वयमेव दर्शयति ।

( आदित्येनैवेत्यादि ) आदित्येन ज्योतिषा आदित्यात्मकप्रकाश-विशेषमादायैवास्ते आसनादिक्रियां सम्पादयति । पल्येति । पर्येति । अत्र परिउपसर्गघटकरेफस्य वैयाकरणनियमात् लादेशः ततश्च पर्येति इतस्ततो गमनादिकां क्रियां सम्पादयति कर्म कुरुते लौकिकं वैदिकमग्निहोत्रादिकं सर्वं कर्म सम्पादयति । विपल्येति विपर्येति । प्रतिनिवृत्यागमनादिकर्म संपादयति । सूर्योदयात् प्राक् सर्वोऽपि प्राणिवर्गोभूत इव शयानो भवति जाते च सूर्योदये तत्प्रकाशप्रकाशितभूम्यादौ सर्वेषां सर्वव्यवहारो गमनागमनादिको नाबाधतया भवति । दृश्यते चेदानीमपि संजायमानसूर्य-प्रकाशे ब्राह्मणाः स्नानादिकर्म कुर्वाणाः पथिकाः गमनादिकं

**विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥२॥**

**अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषाऽऽस्ते**

कुर्वाणाः किं बहुना प्रत्यूषे एव पक्षिणोपि स्वकीयनिनदनशब्दैः प्रकृतिं मनोरमां, कुर्वन्तो भवन्ति । अत एत सुवति कर्मणि लोकं प्रवर्तयतीति सूर्यपदव्युत्पत्तिरपि संगता भवति । तस्मात् हे सम्राट् आदित्य एव ज्योतिः सर्वेषां प्रकाशलक्षणस्तादृशप्रकाशमादायैव सर्वेषां सर्वो व्यवहारो भवती-त्यत आदित्य ज्योतिरयं पुरुष इति । ततो जनको याज्ञवल्क्योक्तं सर्वमंगीकृत्य पुनरपि प्रश्नानन्तरं पृच्छति ।

( एवमेवैतदित्यादि ) हे याज्ञवल्क्य ! यद्भवता कथितं तदेव-मेव सर्वं सर्वथा सत्यमेव । एतत्पुनः पृच्छामि इति ॥२॥

प्रश्नमेव दर्शयति

( अस्तमिते आदित्ये इत्यादि ) हे याज्ञवल्क्य ! आदित्ये सूर्ये जगत्प्रकाशके अस्तमितेऽस्तं गते सति किं ज्योतिरयं पुरुष इति । नहि सर्वव्यवहार आदित्ये प्रकाशाधीन एव भवति आदित्यास्तमयानन्तरमपि शयनासनादिव्यवहारस्य दर्शनात् । तथा च रात्रावपि व्यवहारस्य दर्श-नात् किं ज्योतिः पुरुषः अन्वयव्यतिरेकाभ्यां हि कारणत्वस्य निर्णयः । प्रकृते तु अन्वयमात्रमेवोपलभ्यते, न तु व्यतिरेकः सवितुः प्रकाशाभावेऽपि शयनादिकार्यदर्शनात् । तत्कथं विनिर्णीतमादित्यज्योतिरयं पुरुष इति प्रश्नः?

उत्तरयति ( चन्द्रमा इत्यादि ) हे जनक चन्द्रमा एवास्य पुरुषस्य ज्योतिर्भवति चन्द्रमसैवायं पुरुषः आसनादि कार्यं करोति इतस्ततो याति लौकिकं वैदिकं कर्म करोति विपर्येति प्रत्यागतोभवति । तस्मादादित्यस्या-स्तमयानन्तरं चन्द्रप्रकाशेन कार्यदर्शनात् चन्द्रमा एव तदा ज्योतिर्भवतीति

**पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ।।३।।**

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवाऽयं ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्येतीत्येवमेवतद्याज्ञवल्क्य ।।४।।**

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं**

श्रुत्वा जनकः प्राह हे याज्ञवल्क्य एवमेवैतदिति ।।३।।

पुनरपि जनकः पृच्छति हे याज्ञवल्क्य ! आदित्ये सूर्येऽस्तमितेऽस्तं गते सति चन्द्रे चास्तमिते तस्याप्यस्तमयानन्तरं किंज्योतिरयं पुरुषः । उभयोः सूर्यचन्द्रमसोरस्तमयानन्तरं कं ज्योतिर्विशेषमादाय प्राणिनां व्यवहारो भवति । व्यवहारस्य प्रकाशजन्यत्वात् प्रकाशकत्वेनाभिमतयोः सूर्यचन्द्रमसोरभावात् कथं लोकानां व्यवहार इति प्रश्नः ? उत्तरयति—

( अग्निरेवास्य ज्योतिर्भवतीत्यादि ) हे जनक ! यदा सूर्यचन्द्रमसोरभावो भवति तदा यः कोपि व्यवहारो भवति चेतनवर्गस्य स सर्वोऽपि लोकव्यवहारोऽग्निज्योतिर्निमित्तक इति भवति सर्वत्राग्निप्रकाशाधीन एव भवति । एतच्छ्रुत्वा जनकः स्वीकारवचनमाह एवमेतद्याज्ञवल्क्येति ।४।

पुनरपि जनकः प्राह हे याज्ञवल्क्य ! यदा सूर्योऽस्तमितो भवति भवति चास्तमितश्चन्द्रोऽग्निश्च शान्तो भवति तदा योयं चेतनवर्गस्य सर्वव्यवहारो जायमानोनुभूयते स किन्निमित्तको भवति । न हि कारणमन्तरेण कार्यं भवति । इह च कारणत्वेनाभिमतसूर्यचन्द्राग्नीनामभावात् चेतनवर्गस्य जायमानो व्यवहारोन्यथानुपपद्यमानः कमपि कारणमाक्षिपतीति आक्षिप्यमाणं कारणं किमिति प्रश्नः याज्ञवल्क्य उत्तरयति ।

( वागेवास्य ज्योतिर्भवति ) अयं भावः सूर्यादिवह्निपर्यन्तव्यव-

**ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येव-मेवैतद्याज्ञवल्क्य ।।५।।**

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भव-**

हारजनककारणानामभावेपि जायमानो व्यवहारो वाग् निमित्तक एव। वाचः साहाय्यमादाय सर्वव्यवहारो भवतीति ननु यथा सूर्यादीनां ज्योतिः स्वभावत्वं न तथा वाचस्तथात्वमनुभवसिद्धमिति वाचोपि तथात्वं दर्श-यन्तीश्रुतिराह

( तस्माद्वै इत्यादि ) हे सम्राट् यस्मात वाचो ज्योतिरूपत्वं तस्मात्कारणात् यत्र यस्यां रात्रौ भाद्रमासीयायां मेघादिना अन्धकारान्त-रितायां स्वः पाणिरात्मीयोपि हस्ताद्यवयवः सम्बद्धोपि न विनिर्ज्ञायते नाव-गतो भवति तत्कालेऽथ यत्र यस्मिन् देशेन्धकाराऽन्धकारिते देवदत्तादेः पुरुष-स्यात्रामुकस्थानेऽहमस्मीत्याकारकः शब्दो निर्गच्छति तदा तत्रासौ वर्तते इति ज्ञात्वा श्रोता उपैव तत्र न्येति उप तत्समीपे निनितरामेति गच्छति तत्र शब्दद्वारा श्रोत्रं प्रकाशकं भवति । अयं भावः यत्र यदा सूर्यादिः प्रका-शको नास्ति भाद्रमासीयान्धकारपरिवृतायाममायामपि शब्दद्वारा आगमन-गमनादिव्यवहारोऽबाधित इव भवतीति । वाचः प्रकाशात्मकत्वं भवत्येवेति याज्ञवल्क्यवचनमाकर्ण्य युक्त्योपजानन् अनुमोदयंश्च तद्वचनमाह ।

( एवमेतद्याज्ञवल्क्येतीति ) ।।५।।

पुनरपि जनकः प्राह

( अस्तमिते आदित्ये याज्ञवल्क्येत्यादि ) हे याज्ञवल्क्य आदित्येऽ-स्तमिते अस्तमिते चन्द्रमसि शान्तेऽग्नौ शान्तप्रायायां वाचि, [illegible]स्वप्नावस्थायां [illegible]याम् इत्यर्थः तदा अयं पुरुषः किंज्योतिर्भवति । स्वप्नावस्थायां बाह्या-व्यवहारः ह लोकस्य बाह्येन्द्रियाणां चोपरमात् तस्मिन्समये यो

तीत्यात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्ये-
तीति ॥६॥

**कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः**

किं ज्योतिर्विशेषमादाय भवतीति प्रश्नः ? उत्तरयति ।

( आत्मैवास्य ज्योतिर्भवतीत्यादि ) हे जनक तत्समये योऽयं पुरुषस्य व्यवहारः स आत्मलक्षणप्रकाशेनैव भवति । यतः तदा आदित्यादि-प्रकाशकस्याभावात् परिशेषादात्मैव स्थितिगमनादिकारणीभूतः प्रकाश-को भवति तस्मात् स्वप्नादिकाले जायमानव्यवहार आत्मप्रकाशाधीन एवेति सिद्धम् ॥६॥

आत्मैवास्य ज्योतिर्भवतीत्यत्रात्मशब्देन ज्योतिःशब्देन च प्रकाश्य-मानपुरुषस्वरूपं किमाकारकमिति पुनः प्रश्नयति जनकः ।

( कतम आत्मेतीति ) हे याज्ञवल्क्य ! अस्मिन् परिदृश्यमानकार्य-करणसमुदाये आत्मा कः ? यो हि प्रकाशको भवतीति प्रश्नः ? उत्तरयति ।

( योयं विज्ञानमय इत्यादि ) प्राणेषु प्राणशब्दबोध्येन्द्रियवर्गेषु मध्ये योयं विज्ञानमयो विज्ञानप्रचुरो ज्ञानधर्मकः पुरुषो हृदि वर्तमान ज्योतिः स आत्मा हृदयकमलमध्यगतः प्राणपदवाच्येन्द्रियसहचरो ज्ञानगुणकः स आत्मेत्यर्थः । विज्ञानमय इत्यत्र मयट्प्रत्ययो न विकारार्थकोऽपि तु प्राचु-र्यार्थकः यवमयो यज्ञ इतिवत् । एतावता यो यत्प्रचुरः स तद्भिन्नो यथा यवप्रचुरो यज्ञो यवभिन्नस्तद्वत् विज्ञानप्रचुरत्वादात्मा विज्ञानव्यतिरिक्तः । एव प्राणेषु इत्यत्र सप्तमीविभक्तिनिर्देशात् इन्द्रियव्यतिरेकोप्यात्मनः सिद्ध्यति । एवं यथा प्रभाद्वारा जगदवभासकः सविता ज्योतिरिति कथ्यते तथा ज्ञानात्मकप्रकाशद्वारा सर्वावभासक आत्मा विज्ञानगुणकज्योतिरिति कथ्यते ।

**पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नोभूत्वेमं लोकमतिक्रामति मृत्योरूपाणि ॥७॥**

**स वाऽयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः**

( स समान इत्यादि ) स जीवात्मा यद्यपि परमेश्वराधीनकर्तृत्वः तथापि "अहंकारविमूढात्मा कर्ताहमिति मन्यते" इति भगवदुक्तरीत्या समानः सन् स्वातन्त्र्याभिमानमोहितः सन् ध्यायतीव चिन्तयतीव लेलायतीव स्वतन्त्रः कर्ता इव । उभौ लोकावनुसञ्चरति लोकद्वयेपि सञ्चरणं करोति । लेलायति चरतीवेति कथनेन जीवे यत् कर्तृत्वमाभाति तत् परमेश्वराधीनमौपाधिकं चेति ज्ञातव्यम् । न च ध्यायतीवेत्यत्रेवशब्दप्रयोगात् जीवस्य कर्तृत्वं सर्वथैव नास्तीति वाच्यम्, कर्त्ता शास्त्रार्थवत्वादिति व्याससूत्रे सांख्यतंत्रसिद्धकर्तृत्वं निराकृत्य कर्तृत्वस्येतरवादिभिः सर्वैरेव स्वीकृतत्वात् । तच्च कर्तृत्वं सर्वशक्तिमतः परमेश्वरस्य जीवस्य तु तदधीनं कर्तृत्वमितिस्थितमिति ।

( स हि स्वप्न इत्यादि ) स परायत्तकर्तृत्वो जीवः स्वप्नः स्वप्नावस्थो भूत्वा स्वप्नावस्थायां यादृशविशिष्टोऽभवत् तादृशदेहातिरिक्त गोव्याघ्रादिशरीरगतो भूत्वा । इयं परिदृश्यमानं लोकं जाग्रत्प्रपञ्चात्मकं तथामृत्योर्दुःखप्रदस्य संसारस्य रूपाणि दुःखात्मकानि एतादृशानि मनुष्यादिशरीराणि अतिक्रामति स्वप्नावस्थायां दुःखजनकानि मनुष्यादिशरीराणि न पश्यतीत्यर्थः । एवञ्च स्वप्नावस्थायां जाग्रत्कालिकशरीरादर्शनात् शरीरान्तरपरिग्रहदर्शनाच्च शरीरभिन्नत्वमन्वयव्यतिरेकाभ्यां जीवात्मनः प्रदर्शितं भवतीति भावः ॥७॥

शरीरेन्द्रियप्राणमनो बुद्धिभिन्नस्य जीवात्मनो योऽयं पापादिसम्बन्धः सन् स्वाभविकोऽपि तूपाधिनिबन्धन एवेति दर्शयितुं श्रुतिराह

( स वा अयं पुरुष इत्यादि ) स वायं पुरुषः खल्वयं जीवो जायमानः

**संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ॥८॥**

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोक-**

उत्पद्यमानः ननु नित्योयं जीवस्तत्कथमेतस्योत्पत्तिः स्यात् न हि नित्यस्य गगनादेरुत्पत्तिर्दृश्यते श्रूयते उपपद्यते तदेव नित्यस्य नित्यत्वं यत् प्रागभाव-प्रध्वंसाप्रतियोगित्वं जन्यत्वे तन्नस्यादतो जायमान इत्यर्थं स्वयमेव श्रुतिराह शरीरमभिसम्पद्यमानः नवनरशरीरसम्बन्धं भजमानः ततश्च शरीरसम्बन्ध एवास्य जीवस्य जननं न तु वस्तुत उत्पत्तिर्जीवनम् मुख्ये बाधकस्य सद्भावात् । मुख्ये बाधकसत्त्वे गौणीवृत्तेः स्वीकारात् तदिह मुख्यार्थबाधात् गौणीवृत्तेरा-श्रयणेन गौणार्थ एव परिगृहीत इति । शरीरसम्बन्धादनन्तरमेव स जीवः पाप्मभिः पापात्मककर्मणा सम्बद्धो भवति एवं च शरीरसम्बन्धोपाधिक-एवास्य पापादिसम्बन्धो न तु स्वाभाविकः पापसम्बन्धः । स जीव उत्क्रामन् शरीरसम्बन्धं परित्यजन् म्रियमाणो मरणव्यवहारं भजन् पाप्मनः पापसम्ब-न्धं विजहाति परित्यजति । यद्यपि नित्यस्य मरणं न सम्भवति । अतः श्रुति-रुत्क्रामन्निति कथितम् । अत्र चोत्क्रमणमात्यान्तिकोत्क्रमणमेव विवक्षितम् । शरीरसम्बन्धाभावाय पापं परित्यज्यति सर्वपापविधूननस्यान्यत्र श्रवणात् । यत्सत्वे यत्सत्वं यदभावे च यदभाव इत्यन्वयव्यतिरेकाभ्यां शरीरसम्बन्ध-मूलक एव पापसम्बन्धो जीवस्येति नतु स्वाभाविक इति ॥८॥

अथ स्वप्नो भूत्वेमंलोकमतिक्रामति इत्यादिना जीवस्य शरीरव्यति-रेकसमर्थनं न युक्तमिवाभाति, यतः इहलोकपरलोकयोरेव देहपरिग्रहस्थान-त्वात् स्वप्नस्य च शरीरपरिग्रहस्थानत्वाभावादित्याशंकामपाकर्तुं श्रुतिराह

( तस्य वा एतस्य पुरुषस्येत्यादि ) तस्य वा एतस्य शरीरसम्बन्ध-युक्तस्य पुरुषस्य द्वे द्वित्वसंख्याविशिष्टे स्थाने भवतः, इदं च परलोकस्था-नञ्च । अयञ्च परश्च लोक इत्येतत्स्थानद्वयमित्यर्थः । सन्ध्यं तृतीयं स्वप्न-

**स्थानञ्च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति**

स्थानं जीवस्य भवतीति शेषः। सन्ध्यं नाम सन्धौ भवं जायमानम्। यदिदं स्वप्नरूपं तृतीयं स्थानं स्वप्नलक्षणं जीवस्य तत्स्थानद्वयानुभवयोग्यत्वात् तृतीयं स्थानमिति कथ्यते। यतो जाग्रत् जीव इममेव लोकं केवलम्पश्यति। स्वप्नावस्थस्तु जीवः कदाचित् इमं लोकमपि पश्यति कदाचित् परलोकं स्वर्गनरकादिकं पश्यति। ततश्चेह लोकपरलोकस्थानदर्शनयोग्या ताभ्यां विलक्षणा काचिदियं तृतीया स्वपनावस्था भवति जीवस्येति। एतदेवार्थं व्यासरूपेणाह श्रुतिः।

( तस्मिन्संध्ये इत्यादि ) तस्मिन्स्थानद्वयविलक्षणे सन्ध्ये सन्धौ भवे स्थाने तिष्ठन् जीवः एते उभेपि स्थाने पश्यति तत्स्थानस्थितपदार्थान् साक्षात्करोति। किं तत्स्थानद्वयं यत् स्वप्नस्थः पश्यति तत्राह।

( इद च स्थानं परलोकस्थानं चेति ) ननु परिदृश्यमानदेहवियोगानन्तरमेव पुरुषः परलोकं स्वर्गनरकादिकं पश्यति तथा सति जीवन् एतद्देहे विद्यमानः स्वप्नावस्थः कथं पश्यतीत्याशंकां निवर्तयितुमाह

(अथ यथाक्रमोयमित्यादि) आक्रामत्यनेनेति आक्रमः पुण्यपापलक्षणः तमाक्रममादायायं जीवः परलोकस्थाने भवति परलोकं प्राप्य सुखं दुःखमनुभवति! तमाक्रममाक्रम्य तादृशं पुण्यं पापं चादायोभयान् पाप्मनः आनन्दांश्च पश्यतिस्वप्ने। अयं भाव यादृशपुण्यपापलक्षणमाक्रमविशिष्टोभूत्वाजीवः परलोके सुखदुःखेऽनुभवति तथा तथैव पुण्यपापलक्षणमाक्रममादाय तत्प्रयुक्तस्तदनुकूलान् सुखदुःखादीननुकूलान् प्रतिकूलान् स्वप्नावस्थायामपि पश्यति। एवं च स्वप्नकाले परिदृश्यमानशरीरातिरिक्तशरीरेणोपभोगयोग्यं पुण्यपापप्राप्तं परलोकस्थानमेव। पुण्यवशात्स्वप्ने देवादिशरीरमासाद्य तदुचितान् भोगान्

**स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं निहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति ॥९॥**

भुनक्ति, पापबलात् दुःखमयशरीरमासाद्य तदुचितदुःखमनुभवतीति । भवति स्वप्नस्थानस्य परलोकवस्तुप्रापकत्वमिति । ननु यथा परलोके पुण्यपापादिबलेन पदार्थसृष्टिर्भवति तथैव यदि पुण्यपापबलेन स्वप्नेपि सृष्टिर्जायते इति मन्यते तदा स्वप्नसमये प्रकाशकेन्द्रियस्य मनसोनुपरमात् आत्मनः स्वयंज्योतिःस्वभावत्वं कथं सिद्धयेत् प्रकाशकस्येन्द्रियस्य तदापि सद्भावादित्याशंकायामाह श्रुतिः ।

( स यत्र प्रस्वपितीत्यादि ) स जीवो यत्र यस्मिन्काले प्रस्वपिति स्वप्नावस्थायां अनुभवं करोति तदा सर्वावतः सर्वतो भोग्यभोगोपकरणादि- सर्वयुक्तस्यास्य परिदृश्यमानस्य लोकस्य प्रपञ्चस्य मात्राम् मीयते प्रज्ञाप्यते अनेनेति मात्रा प्रकाशकेन्द्रियसमुदायस्तमिन्द्रियवर्गम् उपादाय गृहीत्वा स्वयं निहत्य तमिन्द्रियवर्गं प्रकाशकत्वेनाभिमतं निहत्य निश्चेष्टतां व्यापार- रहितं कारयित्वा स्वयं स्वेनैव निर्माय निर्माणं कृत्वा । यद्यपि निर्माणका- र्तृत्वं भगवत एव तथापि अदृष्टद्वारा निर्माणकर्तृत्वं जीवस्येति तदुक्तमन्यत्र कर्मणाऽजनयत् पितेति । स्वेन भासा स्वेन ज्योतिषा स्वकीयप्रकाशरूपेण प्रस्वापिति निद्रातीत्यर्थः । अत्रास्यामवस्थायां पुरुषो जीवः स्वयं ज्योतिः स्वयं प्रकाशको भवति । यद्यपि स्वाप्निकपदार्थस्य भानमात्मधर्मभूतज्ञाने- नैव भवति न तु आत्मज्योतिषा तद्भानं, तथापि यथा आदित्यः प्रकाशद्वारा सर्वानवभासयन् स्वयं प्रकाशस्तथैवात्मापि स्वधर्मभूतज्ञानेनावभासयन् स्वयं प्रकाश इति कथितो भवतीति ॥९॥

ननु पूर्वमुपपादितं यत् आत्मज्योतिषाऽऽस्ते कर्म कुरुते तन्नोपपद्यते

**न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः**

आसनगमनादिक्रियायास्तदानीमभावात् । वस्तुतोऽभावे कस्यप्रकाशकत्व-मित्याशंक्याह ।

( न तत्र रथा न रथयोगा इत्यादि ) तत्र स्वप्नकाले संवृतहृदयप्रदेशे रथागमनसाधनलक्षणाः शकटादयो न भवन्ति, नैव विद्यमानाः सन्ति, संवृतसूक्ष्महृदयप्रदेशे तत्सत्वासंभवात् । तथा रथयोगा अश्वादयो रथ-वाहका अश्वादयो न भवन्ति । तत्र युज्यन्ते रथनयनाय रथे संबध्यन्ते इति योगाः रथस्य शकटादेर्योगा रथयोगा अश्वबलीवर्दादिका. एते रथयोगास्तदानीं न भवन्ति तथा पन्थानो मार्गा यत्र संचरन्तो रथा दृश्यन्ते तानि राजमार्गादीन्यपि न भवन्ति सूक्ष्मनाडीविषये तेषामसम्भवात् । अथ तथापि सर्वशक्तिसम्पन्नो वसुधापतिर्भगवान् रामोघटितघटनापटीयसीमायासहकारिणासम्भाव्यमानानपि रथादीन् गमनादिसाधनभूतान् सृजते उत्पादयति रथयोगान् अश्वादींश्च सृजते पथस्तादृशरथादिगमनदेशान् अपि सृजते समुत्पादयति । ततश्च भगवता समुत्पादितं रथादिकं स्वप्नावस्थः पुरुषः पश्यतीति नार्थाभावस्तदानीं शंकनीयः । तथा तत्र स्वापसमये आनन्दाः भवन्ति । तत्रानुकूलविषयदर्शननिबन्धना प्रीतिरेवानन्दः । तथा तदानीं मुदोपि न भवन्ति इदं मदीयमित्याकारकस्वकीयत्वबुद्धिजनिता प्रीतिरेव मुत् । तदभावस्तत्र । तथा प्रमुदोपि न भवन्ति तत्र विनियोगजनिता या प्रीतिः सैव प्रमुत् । यद्यपि इमे आनन्दादयास्तत्र न भवन्ति । अथ तथापि एतानानन्दादीन् स्वकीयशक्त्या भगवानेव सृजते समुत्पादयति । तथाच भगवन्निर्मितपदार्थजातमांतरं स्वप्नदृक् पश्यतीति । अन्तरानन्दादीनामुत्पत्तिप्रकारं दर्शयित्वा अतिवाह्य बाह्यपदार्थादीनामुत्पत्तिं स्वप्नावस्थायां दर्शयितुमाह ।

**सृजते न तत्र वेशान्ताः पुष्कर यः स्रवन्त्यो भवन्त्यथ वेशान्ताः**

( न तत्र वेशान्ता इत्यादि ) तत्र स्वप्नावस्थायां वेशान्ताः पल्वलानि क्षुद्रामेध्यजलाशयानि पुष्करिण्यः प्रोत्फुल्लपंकजयुक्ता नद्यो न भवन्ति। तथा स्रवन्त्यो गिरिदुर्गादितः क्षरणशीला महानद्यो न भवन्ति । अथ तथापि सर्वशक्तिसम्पन्नः साकेताधिपतिस्तान् तान् सर्वानिव बाह्यार्थान् सृजते समुत्पादयति ।

ननु यद यत्र देशे स्वप्नदृक् पुरुषो रथादि पदार्थजातं पश्यति तस्मिन् समये तत्र वर्तमानोऽन्यो न पश्यति । यदि परमेश्वरकर्तृको रथादिर्भवेत् तदा अन्योपि पश्यति यथा जाग्रत्काले एको देवदत्तो घटादिकं यत्र पश्यति तदा तत्रैवान्यो यज्ञदत्तादिरपि तं पश्यति । दृश्यतेचैकस्मिन् नर्तकीभ्रूलताविक्षेपे बहूनां प्रतिसन्धानम् । एवं स्वप्नदृष्टपदार्थे स एव स्वप्नदृक् प्रबोधानन्तरं तस्मिन्देशे याति तदा स्वप्नदृष्टं रथादिकं न पश्यति। तादृशा रथादयोऽन्यत्र गता इति तेषां गमनचिह्नादिकं न जानाति, न वा ते पदार्था विनष्टा इति तेषां नाशचिह्नान्यपि नावगच्छति । अतः कथमेतादृशी स्वप्नसृष्टिरुपपद्यते परमेश्वरकर्तृकत्वे यदि सर्वदा सर्वत्र सर्वपुरुषेणोपलभ्येत नोपलभ्यते तस्मादिदं सर्वमसमंजसमित्याशंकामपनोदितुमाह—

( स हि कर्तेति ) सकलप्रपञ्चस्योत्पादको हि भगवान् सर्वेश्वरः सर्वशक्तिमांश्च विचित्रप्राणिकर्मबलेन सर्वस्य जनकः स किं किं न कर्तुं समर्थः अघटमानामपि सृष्टिं सर्जयति न तत्र तर्कावसरः । तदुक्तम् "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेदिति ।" एतादृशाभिप्रायविशेषं द्योतयितुमेव प्रकृते हि शब्दो नियोजित इति । अथ स हि कर्तेत्यत्र स यत्र प्रस्वपितीति वाक्येन प्रक्रान्तजीवस्यैव ग्रहणं कुतो न भवति अकस्मात् परमेश्वरस्य ग्रहणे प्रकरणविरोधादिति चेन्न । 'सन्ध्ये सृष्टिराह हि' इत्यधिकरणे स्वप्नसृष्टेर्जीवकर्तृकत्वं निराकृत्य परमेश्वरकर्तृकत्वस्यैव

तुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ता ।।१०।।

...थापनात् । तथा हि "न तत्र रथा न रथयोगा" इत्यादिवाक्ये स्वप्ने जीवकर्तृकैव सृष्टिः प्रतिपाद्यते । तथा "एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण" इत्यादौ कामानां निर्मातारं जीवमेव दर्शयति । अत्र "कामना-विषयाः पुत्रादयः शतायुषः पुत्रपौत्रान् वृणीष्व" इत्यादौ तथा दर्शनात् । पुत्रादयः कामाः तस्मात् जीव एव प्रकृते कर्ता तत्कर्तृकैव स्वप्नसृष्टिरिति । न च जीवस्याल्पप्रज्ञस्य कथमेतादृशसृष्टौ कर्तृत्वं स्यादिति वाच्यम् । प्रजापतिवाक्ये जीवस्यापि सत्यसंकल्पादेः कथनात् । न च जीवे वर्तमाना अपि ते गुणाः संसारदशायां तिरोहिता नातस्तमादाय कर्तृत्वं जीवस्य घटते इति वाच्यम् ? यथा मुक्तिदशायामेते सत्यसंकल्पादयो गुणाः प्रादुर्भवन्ति तथैव स्वप्नदशायामपि जीवे प्रादुर्भावसम्भवात् । तस्मात् जीवकर्तृकैव स्वप्नसृष्टिर्नतु परमेश्वरकर्तृका तथात्वे स्वप्नसृष्टेरपि घटादिसृष्टिवत् स्था-यित्वप्रसंगे न जागरितावस्थायां तद्बा संभवादिति पूर्वपक्षे प्राप्ते "मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वा" दिति सूत्रेण समाधानस्य भगवता व्यासेन सम्पादनात् । तथाहि अत्र मायाशब्दः आश्चर्यरूपमर्थमादाय परमेश्वर-शक्तिसंकल्पवाचकः निघण्टुप्रभृतिकोशादौ मायाशब्दस्य परमेश्वरज्ञान-लक्षणसंकल्पवाचकत्वस्य दर्शनात् । ततो मायामात्रं परमेश्वरसंकल्प-मात्रसृष्टमिदं स्वाप्निकवस्तु न तु जीवसृष्टं यतः कात्स्न्येनानभि-व्यक्तस्वरूपत्वात् । प्रजापतिवाक्योदितसत्यसंकल्पत्वादिब्रह्मलक्षणस्यापि जीवस्यासंसारं सर्वात्मनाऽनभिव्यक्तस्वरूपत्वादेतादृशसृष्टिजनकत्वं न सम्भवति तस्मात् "स हि" कर्तेति वाक्ये सर्वसर्जकतया प्रसिद्धपरमेश्वर एव सन्ध्यसृष्टिकर्ता न तु तद्भिन्नो जीवोऽन्यो वा कश्चित्सर्जक इति । किञ्च यदि स्वप्नदृग् जीव एव कर्ता स्वप्नसृष्टेः स्यात् तदा स जीवः सर्वदा सर्वत्र हतप्रयोजनामेव सृष्टिं कुर्यात् सुखसम्पादनाय । न तु कदाचिदपि

आत्मनोऽहितां दुःखप्रयोजिकामेव सृष्टिं कुर्यात् । नहि कोपि सुस्थात्मा स्वानभिमतकार्यं कुर्वाण उपलभ्यते दृश्यते च स्वप्ने भयादिजनकव्याघ्र-चौरश्मशानादित्रिविधदुःखजनकानेकप्रकारिकापि सृष्टिः । तस्मात् न जीवः स्वप्नसृष्टेः कर्ता । अपि च यदि जीवः स्वप्नसृष्टेः कर्ता स्यात् तदा स्वकृतकार्यस्यानुसन्धानमपि स्यात् । इमान् स्वाप्निकपदार्थानहमस्राक्ष-मित्याकारकानुसन्धान कस्यापि न भवति, तस्मात् स्वप्नसृष्टिर्न जीवकर्तृका अपि तु परमेश्वरकर्तृकैवेति निश्चीयते । एवं "कामं कामं पुरुषो निर्मिमाण" इत्यत्रापि तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते" इत्यादि प्रकरणपर्यालोचनेन ब्रह्मविषयत्वमेव काम कामंमितिवाक्यस्य तस्मात् न जीवस्य कर्तृत्वं, किन्तु सर्वेश्वरस्य सर्वशक्तिमत एव कर्तृत्वम् । ननु जीवस्य यदि स्वाभा-विका एव सत्यसंकल्पादयो गुणास्तदा ते कथमनभिव्यक्ता भवन्ति न हि यस्य यः स्वाभाविकः स कदाप्यन्तर्भूतो भवति, जलशैत्यवदिति चेन्न परमात्मसंकल्पादेव जीवस्य स्वाभाविका अपि गुणा अनभिव्यक्ता भवन्तीति गृहाण परमेश्वरकृपयैव जीवानां बन्धमोक्षावपि भवतः "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति, "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति । एष एव हि आनन्दयति एष एव उ साधु कर्म कारयति य मूर्ध्वमुन्निनीषति एष एव उ असाधु कर्म कारयति तं यमेभ्योऽधोनिनीषति" इत्यादि श्रुत्यन्तरात् । सोयं पूर्वोक्तगुणानां तिरोभावो जीवस्य सृष्टिसमये देहसम्बन्धाद् भवति । प्रलयसमये तु सूक्ष्माचित्शक्तिद्वारेण भवतीति । किं च स्वप्नं शुभाशुभसूचकमिति कथयन्ति स्वप्नाध्यायविदः "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने । स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यतीत्यादि" ततश्च यदीयं स्वप्नसृष्टिर्जीवकर्तृका भवेत् तदा जीवः शुभसूचकानेव सृष्ट्वा पश्येत् ना शुभसूचकान् कदाचिदपि सृजेत् पश्येद्वा । तस्मात् नेयं सृष्टिर्जीवकर्तृका

**तदेते श्लोका भवन्ति ।**

**स्वप्नेन शारीरमभिप्रहत्या सुप्तः सुप्तानभिचाकशीति ॥**
**शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः ॥११॥**

अपि तु परमेश्वरकर्तृकैव । अतः स हि कर्त्ता इत्यत्र तत्पदेन परमेश्वर एव सर्वसर्जकस्तत्पदेन गृह्यते इति सर्वमवदातम् ।

यदत्र परैराशङ्कितम् यदि परमेश्वरकर्तृकत्वेन स्वप्ने सृष्टे सत्यत्व स्वीकारे रथाद्युत्पत्तिवदादित्यादेरप्युत्पत्तिस्वीकारे जाग्रत्काल इव स्वप्नकालेपि प्रकाशान्तरस्य विद्यमानत्वेनात्मनः स्वप्रकाशत्वस्य दुर्विज्ञेयत्वमापद्येत तस्मात्स्वाप्निकपदार्थानां सत्यत्वकथनं प्रकरणविरुद्धमिति तदसत् । तन्मते मनसः प्रकाशस्य स्वप्नसमये विद्यमानत्वेनात्मनः स्वप्रकाशत्वसाधनं सर्वथैवासमंजसमेव स्यात् । अतो लोकप्रसिद्धसूर्यादिज्योतिषोऽभावेपि स्वीयज्ञानेन भासकत्वात् स्वयं ज्योतिष्ट्वत्वं भवत्येवेतीत्यत्रैव श्रुतितात्पर्यमिति ॥१०॥

(तदेते श्लोका इत्यादि) तदत्र स्वप्ने स्वप्नदृक्विषये एते वक्ष्यमाणाः श्लोकाः प्रवृत्ता भवन्ति । तदेव श्लोकं दर्शयति–

(स्वप्नेन शारीरमित्यादि) स्वप्नेन स्वप्नेनोपलक्षितो जीव. शरीरं शरीरमेव शारीरं शरीरमित्यर्थः अभिप्रहत्य । शरीरं चेष्टारहितं कृत्वा असुप्तः स्वयमलुप्तप्रकाश एव सुप्तान् क्रियाविरहितान् प्राणान् अभिचाकशीति अभितः चाकशीति । अत्र कशधातुर्गत्यर्थकस्तेन रुर्वतः स्वयं स पर्यटति इत्यर्थः इतस्ततः परिभ्रमतीति । शुक्रं ज्योतिष्मत् प्रकाशं मनः प्रभृतिकमिन्द्रियवर्गमुपादाय पुनरपि स्वप्नान्ते स्थानं स्वकीयस्थानमेति प्राप्नोति स हिरण्मयः प्रकाशात्मक एक हंसः स एकः सजातीयद्वितीयरहितः एव हंति गच्छति एतादृशः पुरुष इति ॥११॥

**प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।।**
**स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः ।।१२।।**

(प्राणेन रक्षन्नित्यादि) अवरम् प्राणाद्यपेक्षया हीनं निकृष्टम् कुलायं कार्यकरणसंघातात्मकं शरीरम् कुलायम् पक्षिणामावासभूमिः कुलायं यथा कुलायात् प्रातः काले पक्षिणो निर्गत्यदिने इतस्ततो भ्रमण कृत्वा सायं समये पुनस्तत्रैव निवासभूमौ प्रत्यागच्छन्ति । एव जीवोऽपि स्वप्नकाले यत्र तत्र गत्वा यथा दृष्टं सुखदुःखप्रयोजकान् तत्तत्पदार्थान् दृष्ट्वा पुनः प्रबोध समये तस्मिन्नेव शरीरात्मककुलाये आविशति तस्मात्कुलायोपमितं शरीरं प्राणाद्यपेक्षया हीनसत्ताकं प्राणेन पंचवृत्यात्मकेन । प्राणेन रक्षन् शरीर-रक्षां कुर्वन् । जीवेन सह प्राणस्यापि शरीराद्बहिर्गमने मरणप्रसंगात् । यथाकश्चित् राजास्वकीयं नगरं स्वस्थितिकाले स्वयमेव रक्षति, अन्यथा रक्षितुरभावे विप्लवापत्तेः । यदा स राजा राज्यकार्यमासाद्य वहिर्गच्छति तदा स्वामात्यद्वारानगररक्षां करोति व्यवस्थापयितुरभावे चौरादिना विप्लवसम्भवात् तथा यदाऽयं जीवो देहाद्बहिर्याति तस्मिन्समये स्वामात्यभूतेन प्राणेन शरीररक्षां कारयति । अन्यथा शरीरविनाश एव भवेत् । ततः प्राणं स्वामात्यं शरीररक्षायां विनियोज्य स्वयं कुलायात् कुलायोपमितात् जाग्रतशरीरात् बहिश्चरि बहिर्गत्वा । यत्र यस्मिन्देशे कामं काम्यते इति कामं भोग्य वस्तुजातम् तत्र तत्र तदुपभोगाय चरित्वा संचरणं कृत्वा भोग्यजातमुपभुज्य अमृतः स्वभावतोऽमरणधर्मा हिरण्मयः स्वयं प्रकशलक्षणः अप्रकाशात्मकत्वे विनिपातप्रसंगात् एक हंसः सहायकान्तरनिरपेक्षः पुरुषः पुरि शयनात् पुरुषः ईयते । स्वस्थानं शरीरं प्रत्यागच्छति । अदृष्टवशात् शरीरात् बहिर्गत्वा यत्रोपभोग्यं तत्र तदुपभुज्योपभोगप्रयोजकादृष्टपरिक्षये पुनरपि स्वकीयं स्थानं प्राणरक्षितं शरीरमाविशतीति ।।१२।।

शरीराद्विनिर्गत्य स्वप्नसमये कमनीयवस्तूपभोगं करोतीत्युक्त तत्र कमनीयं किमिति प्रश्ने कमनीयविशेषं दर्शयितुमाह–

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।।**

**उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ।।१३।।**

**आराममस्य पश्यन्ति न तं पश्यति कश्चनेति तन्नायतं बोधयेदित्याहुः ।।**

(स्वप्नान्ते इत्यादि) स्वप्नान्ते स्वप्नमध्ये प्रकृतेऽन्तशब्दस्य मध्यबोधकत्वात् । देवो जीवो द्योतनात्मकत्वाद्देवः । उच्चावचं पुण्यपापलक्षणमुत्तमाधमं ईयमानः संगच्छमानः बहूनि अनेकप्रकारकाणि रूपाणि देवादिशरीराणि कुरुते भजति देवादिशरीरमवाप्य तदुचितान् भोगान् करोति। उते वापि स्त्रीभिः सह मोदमानो भवति स्त्रीभिः सह विहारादिकं कुर्वन्निव भवति जक्षदिवभवति जक्षणं भक्षणं हसनं वा । क्वचित् भयानि भयजनकानि व्याघ्रादीनि भयप्रयोजकान्यपि पश्यन्भवति बिभेति भयभीतो भवति अनेनेतिभयानि व्याघ्रादिकानि अदृष्टवशात् तत्तदुपभोग्यवस्तुजातानि पश्यति तत्र शुभादृष्टवशात् शुभं पश्यति अशुभादृष्टवशादशुभं पश्यतीति ।।१३।।

ननु यथा भोग्यं वस्तु लोकोऽवगच्छति तथा भोक्तारं जीवं देहाद्बिनिर्गतं कथं न जानाति तत्राह—

( आराममस्य पश्यन्तीत्यादि ) अस्य स्वप्नदृशो जीवस्याराममुपकरणभूतमुद्यानवनादिकं सर्वेऽपि जनाः पश्यन्ति इन्द्रियग्राह्यत्वादुपकरणानाम् । परन्तु तं जीवं शरीरेन्द्रियादिभ्योभिन्नमन्तर्बहिर्वा संचरन्तमपि न कश्चन न कोपि लोकः पश्यति । उपकरणस्य पराग्रूपत्वेनेन्द्रियाग्राह्यत्वं सभवत्यपि किन्तु इन्द्रियाग्राह्यं तमात्मानं न कोपि पश्यतीत्याश्चर्यत्वेनानुक्रोशमुपक्रोशं लोकं प्रति दर्शयति श्रुतिः । इति शब्दो मंत्र परिसमाप्तिद्योतक इति । लोकप्रसिद्धिरपि तथैवेति श्रुतिराह—

**दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यतेऽथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त**

( तं नायतमित्यादि ) स्वप्नसमये सर्वाणीन्द्रियाणि उपहृत्य जीवो बहिर्याति तस्मात्कारणात् आयतं गाढप्रसुप्तं जीवं न बोधयेत् नोत्थापयेदिति शरीरविज्ञानवादिनश्चिकित्सका आहुः कथयन्ति । सुप्तस्योत्थाने दोषं पश्यन्ति । दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते । शरीराद् बहिर्गतो जीवो यमिन्द्रियप्रदेशं न प्रतिपद्यते कदाचित् व्यत्यासेनेन्द्रियान्तरस्येन्द्रियान्तर गोलके प्रवेशयेत् एवं सति आन्ध्यादिदोषप्राप्तौ दुर्भिषज्य दुःखेन भिषज्यकर्मास्मै दोषाय भवति । अयं दोषो असमाधेय एव भवेत् । अयं भावः स्वापसमये सर्वमिन्द्रियमात्रामुपादाय जीवो बहिर्याति । यदि स्वस्थतया आगच्छति तदा तत्तदिन्द्रियं तत्तदिन्द्रिगोलके स्थापयति व्यग्रत्वे इन्द्रियान्तरस्येन्द्रियान्तर गोलके गमनेन महदनर्थसम्भावना स्यात् अतः शयानं सहसा नोत्थापयेत् । तदुक्तं "नैकःस्वपेत् शून्यगेहे शयानं न प्रबोधयेत् । नैकः पर्वतमारोहेत् नैकः सुप्तेषु जागृयात्" अतः सहसोत्थापनं महदनर्थायेति । एतदधिकृत्य विशेषविचारः स्थानान्तरेस्यादिति कृतमत्रपल्लवितेनेति ।

(अथो खल्वाहुरित्यादि) अथो खलु केचनान्ये एवमाहुः कथयन्ति । किं कथयन्ति तत्राह–

(जागरितदेशे इत्यादि) अस्य जीवस्य जागरितदेशे एव जागरितस्थाने एवास्य जीवस्यैषः स्वप्नः नतु स्थानान्तरे स्वप्न इति । कस्मात् जागरितदेशे एव स्वप्नस्तत्रकारणमाह–

(यानि इत्यादि) अयं जीवो यान्येव रथादीनि जाग्रत् पश्यति जाग्रदवस्थायां पश्यति साक्षात्करोति तान्येव वस्तूनि सुप्त इति स्वप्नावस्थायामपि तान्येववस्तुजातानि साक्षात्करोति न ततोभिन्नानीति । अत्र मतान्तरप्रदर्शनस्यायमभिप्रायः स्वप्नदृक् पुरुष इन्द्रियाद्युपरमे एव स्वप्नान्पश्यति अतो

**इत्यत्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥१४॥**

यत्रेन्द्रियस्याप्यवकाशो नास्ति तत्र जागरितदेशस्थ रथादिपदार्थानामवकाशः कथं सम्भवेत् तस्मात्स्वप्नस्थानं तृतीयस्थानमिति । अन्ये तु केचनैवं कथयन्ति यत् अथोखल्वित्यादिग्रन्थो न मतान्तरप्रदर्शनपरकोऽपि तु पूर्वसमर्थितार्थप्रतिपादक एव न तु मतान्तरप्रदर्शनपरक एव । तत्र जागरितदेश इत्यत्र ईषदसमाप्त्यर्थे देश्यप्रत्ययः छान्दसत्वात् यकारस्य लोपः ततश्च जागरितदेश इत्यस्य जागरितादीषन्न्यूनमित्यर्थः । स्वप्नदृष्टार्थस्य दिनान्तरेऽनुभवायोग्यत्वमेवेषन्न्यूनत्वम् । प्रमुमेवार्थमुपपत्तिमुखेन प्रदर्शयति

(यानि एवेत्यादि) यानि हस्तिरथादीनि जाग्रत्काले पश्यति तान्येव वस्तुजातानि अर्थक्रियासमर्थानि स्वप्नकालेपि स्वप्नदृक् पश्यति तस्मात् स्वाप्निकार्थाः सृष्टा एव भवन्ति । तत इहलोकपरलोकातिरिक्तस्थानान्तरमेव स्वप्नस्थानमिति प्रतिपादयन्तीति । पूर्वप्रतिपादित आत्मनः स्वयंज्योतिष्ट्वमुपसंहरन्नाह

(अत्रायमित्यादि) हे जनक ! अत्र स्वप्नावस्थायाम् अयं पुरुषो जीवः स्वयं ज्योतिर्भवतीति । एवं याज्ञवल्क्यस्योपपत्तिमद्वचनं श्रुत्वा ज्ञातात्म प्रकाशको जनकः प्राह–

( सो हमित्यादि ) हे भगवन् सोहं प्राप्तस्वयंज्योतिष्ट्व विद्यः तद्विद्यानिष्क्रमत्वेन भगवते तुभ्यं सहस्रं गवां दक्षिणारूपेण ददामि । प्रतिपादयामीति–

( अत ऊर्ध्वमित्यादि ) अत ऊर्ध्वमतः परं विमोक्षाय संसारनिवृत्तये ब्रूहि संसारस्य निवृत्तिसाधनं कथय । एतदतिरिक्तस्य प्रयोजनं नास्ति । सर्वोपि कर्मकलापः संसारायैव भवति, अतः संसारनिवृत्तिसाधनमेव मे प्रतिपादयतु भगवानिति ॥१४॥

**स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्या-**

( स वा एष एतस्मिन्नित्यादि ) स वा एष जीव एतस्मिन् संप्रसादे स्वप्ने संप्रसीदति सुप्रसन्नो भवति अस्मिन्निति संप्रसादः स्वप्नः जागरितावस्थायां शरीरेन्द्रियप्रभृतीनां व्यापारशते सम्पर्कजनितकालुष्यं भवति जीवस्य तेभ्यः कालुष्यादिभ्यो रहितः स्वप्नावस्थायां लेशतः प्रसीदति सुप्रसन्नो भवति । अतः सप्रसादशब्देन स्वप्नस्थानमेव बोधितं भवति । यद्यपि संप्रसादशब्दो मुख्यया वृत्त्या सुषुप्तौ रूढस्तथापीतः पूर्वं स्वप्नस्य प्रस्तुतत्वात् स्वप्नस्य एतस्मिन्संप्रसादे इत्यत्र ग्रहणं युक्तम् एवं सति सप्तम्यन्तयोर्द्वयोः सामानाधिकरण्यमपि उपपद्यते । सप्रसादे सुषुप्तौ गन्तुं प्रवृत्ते सति जीवे एतदधिकं पूरणीयमिति । तस्मिन्संप्रसादे स एष जीवो रत्वा रमणं क्रीडां कृत्वा । रमेरनिट्त्वात् अनुनासिकलोपे रत्वेति प्रयोग इति शाब्दिकानां परिभाषा । चरित्वा विहारादिकं कृत्वा भक्षयित्वा वा दृष्ट्वैव पुण्यं पापं वा पुण्यफलं मनोज्ञानवस्त्रवनितादिकं मनसः प्रीतिजनकं पापं पापफलं वीभत्सभयानकादिव्याघ्रादिकं भयप्रदं दृष्टवा समनुभूय प्रतिन्यायं येन प्रकारेण तत्रगतोऽभूत् तेनैवक्रमेण स्वप्नायैव स्वप्नानुभवार्थं प्रतियोन्याद्रवति प्रत्यागच्छति । प्रतियोन्याद्रवतीत्यत्र योनिशब्दः स्थानवाचीति—

( स यत्तत्रेत्यादि ) स जीवस्तत्र जाग्रदादिकाले यत् यत् किञ्चित् शुभमशुभं वा मनुष्यव्याघ्रादिशरीरादिकमात्मीयत्वेन पश्यति साक्षात्करोति तेन साक्षात्कृतेन वस्तुना अनन्वागतोऽननुसृतः सम्बन्धरहितो भवति अथवा स स्वप्नदृक् जीवस्तत्र स्वप्नसमये यत्किंचित्पश्यतितेनान्वागतः सम्बद्धो न भवति । स स्वप्नदृक् केवलं पश्यत्येव नतु करोति । कारणादेव

**वल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१५॥**

**स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव स यत्तत्र**

सम्बद्धो भवति नतु दर्शनात् । न हि अग्निदर्शकोऽग्निना सम्बद्धो भवति अतो जाग्रत्कालिकपदार्थजातं पश्यन्नपि तदा तत्सम्बन्धरहित एव भवतीति । असम्बन्धे कारणं दर्शयति—

(असंगोह्ययं पुरुष इतीति) अयं जीवः पुरुष इति नामधारी असंगः सम्बन्धरहितः कर्माविद्यामूलककार्यकरणसमुदायात्मक शरीरेण स्वभावतोऽसंगत्वात् । यदि कदाचिदेतस्य केनचित्संगः स्वाभाविकः स्यात् । भवेत्तदास्य तस्य पदार्थस्यानुवर्तनम् नत्वेवमात्मनः स्वभावः स तु परमात्मांशत्वात् सर्वदैव निर्मलो गगनवत् । तस्मादसंगस्वभावत्वात् जाग्रत्कालिकपरिदृष्टपदार्थानामननुवृत्तिर्युज्यते एवेति । एवं याज्ञवल्क्यवचनं श्रुत्वा तदंगीकुर्वन् प्रोवाच जनक—

( एवमेवैतदित्यादि ) हे याज्ञवल्क्य ! यत् भवता कथितं तदेवमेव तत्सर्वं सम्यगेव । सोहं जनकस्तव प्रसादात् विदितात्मवृत्तस्तद्दक्षिणारूपेण भगवते पूजावते तुभ्यं गवां सहस्रं ददामि अर्पयामि । अत ऊर्ध्वमतःपरं विमोक्षाय संसारनिवृत्तिसाधनाय ब्रूहि यावता संसारनिवृत्तिर्भवेत् तादृशं साधनं मे कथयेति ॥१५॥

विमोक्षायैव ब्रूहीति जनकवचनमाकर्ण्य याज्ञवल्क्यः प्राह—

(स वा एष एतस्मिन्नित्यादि) स वा एष प्रकृतो जीव एतस्मिन् प्रकृते स्वप्नान्ते स्वप्नस्थाने । यद्यपि अन्तशब्दोऽनेकार्थकः समाप्तिस्थाननिर्णयाभ्यन्तरादिवाचकस्तथापि प्रकृते योग्यत्वात्प्रकरणाच्च स्थानवाची एव । तथा

किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत उर्द्ध्वं विमोक्षायैव ब्रूहीति ॥१६॥

च प्रकृते स्वप्नस्थाने रत्वा रमणं कृत्वा चरित्वा भक्षयित्वा विहरणादिकं कृत्वा पुण्यं पुण्योपनीतं स्रक्चन्दनादिस्वानुकूलम् पापं पापोपनीतं बीभत्स भयानकादि व्याघ्रादिकं प्रतिकूलं दृष्ट्वा साक्षात्कृत्य पुनः पुनरपि पूर्वसंस्कारबलात् प्रतिन्याय येनैवक्रमेण गतवानभवत् तेनैव मार्गेण प्रति योन्याद्रवति प्रत्यागतो भवति । कुत्र प्रत्यागतो भवति तत्राह

(बुद्धान्ता यैवेति) तत्र बुद्धं बोधो ज्ञानम् अन्तशब्दः स्थान वाचकस्तथा च स्थिरबोधस्थानाय जाग्रत स्थानायेत्यर्थः । जाग्रत्स्थानस्यस्थिरबोधस्थानत्वं नाम दृढतरसंस्कारोत्पादकत्वमेव । जाग्रत्कालिकपदार्थज्ञानस्य संस्कारद्वारा बाहुल्येन स्मरणजनकत्वस्य दृष्टत्वात् । ततश्च जाग्रत्स्थानार्थं पुनरपि जीवः स्वप्नस्थानादागतो भवति ।

( स यत्तत्रेत्यादि ) स जीवस्तत्र प्रबोधावस्थायाम् यत्किंचित् पश्यति घटादिकं साक्षात्करोति तेन परिदृष्टेन पदार्थेन सहानन्वागत एव भवति तत्तत्पदार्थसम्बन्धरहित एव भवति यतः यं पुरुषः अतिसूक्ष्मतया स्वभावतः सर्वं सम्बन्धरहितत्वात् एतदुपश्रुत्य जनकः प्राह—

हे याज्ञवल्क्य ! एवमेवैतत् यदुक्तं तत्सम्यगेव । सोहं ज्ञातवृत्तो जनक भगवते पूजार्हाय तुभ्यं गवां सहस्रं दक्षिणारूपेण ददामि प्रयच्छामि । कृपां कृत्वा अत ऊर्ध्वमतः परं विमोक्षाय ब्रूहि । सावतासंसारनिवृत्तिर्भवेत् तादृशं साधनमुपदिशेति ॥१६॥

**स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नान्तायैव ॥१७॥**

**तद्यथा महामत्स्य उभे कूलेऽनुसञ्चरति पूर्वञ्चापरञ्चैवमेवायं**

(स वा एष इत्यादि) विमोक्ष साधनं वक्तुं याज्ञवल्क्यः प्राह हे जनक ! स वा एष जीव एतस्मिन् बुद्धान्ते प्रबोधावस्थायां रत्वा रमणं कृत्वा चरित्वा भक्षणविहारादिकं यथेच्छं संपाद्य पुण्यं पुण्योपनीतं स्रगादिकं पापं पापोपनीतं भयानकादिकं वस्तुजातं दृष्ट्वैव समनुभूय श्रान्त इव यत्किंचित् स्वास्थ्यलाभाय पुनः पुनरपि प्रतिन्यायं पूर्वक्रमेण स्वप्नाय स्वप्नस्थानाय प्रतियोन्या द्रवति गच्छति । प्रबोधात् स्वप्नेगच्छति स्वप्न-स्थानात्प्रबोधे आगच्छति पुनरपि प्रबोधात् स्वप्ने गच्छति । एवं क्रमेण खण्डत्रयेण जागरितस्थानात्स्वप्नस्थानं स्वप्नस्थानात्बुद्धान्तं बुद्धान्तात्स्वप्न-स्थानं जीवो गच्छत्यारोहावरोहसञ्चारप्रदर्शनात् संसारचक्रप्रवृत्तेर्नैयत्यं दर्शितं भवति । यथा घटीयन्त्रमनवरतं क्रियाशीलमेव भवति तथा जीव-स्याप्ययं संसारे यावत्तत्त्वज्ञानमवस्थित एव भवतीति संसारात्वैराग्यं व्यञ्जितमिति भावः ॥१७॥

कर्मजालावृतस्य जीवस्य स्वप्नजागरितोभयस्थानसञ्चारेऽनुरूप दृष्टान्तं दर्शयितुमाह–

(तद्यथा महामत्स्य इत्यादि) यथा येन प्रकारेण महामत्स्यो राघव-नामः श्रूयते किल ‘ तिमिंगिलो नाममत्स्यः शतयोजन विस्तरः । तिमिङ्गि-लोप्यस्ति तद्गिलोप्यस्ति राघवः” इति इतादृशो महामत्स्यो महाजलस्योभे कूले उभयतटे अनुसञ्चरति । महाजले वर्तमानो महामत्स्यः पार्श्वाभ्यां तटद्वयं स्पृशन् याति । पूर्वं तटं अपरं पश्चिमं तटम् । उत्तर-मुखावस्थित महामत्स्य पूर्वपश्चिमतटस्पर्शः पूर्वाभिमुखस्य तु दक्षिणो-त्तरतटस्पर्शो ज्ञातव्य इति । एवमेव महामत्स्यदृष्टान्तेनायं पुरुषो

**पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च ॥१८॥**

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥१९॥**

जीव एतावुभावन्तौ स्वप्नान्तबुद्धान्तौ अनुसञ्चरति महामत्स्यवत् मध्येऽवस्थित उभावप्यन्तौ स्पृशति । स्वप्नान्तं स्वप्नस्थानं बुद्धान्तं प्रबोधस्थानं चेति ॥१८॥

एवं क्रमिकस्थानद्वये जीवस्य सञ्चारं दर्शयित्वा सुषुप्तिदशां यत्र जीवः सर्वथैव कार्यकरणश्रमरहितः सुप्रसन्नः सुस्थो भवतीति दर्शयितुमाह-

(तद्यथाऽस्मिन् आकाशे इत्यादि) यथा येन प्रकारेणास्मिन् भूताकाशे श्येनो बलवीर्यशालिपक्षिविशेषः सुपर्णो गरुडो वा विपरिवर्त्य इतस्तत उड्डयेन श्रान्तः श्रमयुक्तो भवन् श्रमापनोदनार्थं सुखप्राप्तये च पक्षौ संहृत्य उड्डयनकरणं पक्षद्वयं संकोच्य संलयाय समीचीननीडप्राप्तये ध्रियतेऽवतिष्ठत्तेवासवृक्षमालबते । एवमेव तेनैवप्रकारेणायं पुरुषो जीवो बुद्धान्तस्वप्नान्तस्थानद्वयेऽनवरतसंचरणेनातीवश्रान्तो भवन् एतस्मै अन्ताय त्रिलक्षणस्थानाय धावति स्थानद्वये सञ्चरणजनितश्रमापनोदनाय निरतिशयसुखसदृशसुखायाप्तये च गच्छति यत्र च सुप्तो यस्मिन्सुषुप्तिस्थाने गतः सन् न कंचन कामं कामयते केनापि कामादिना दुःखकारेणोपहृतो न भवति न कचन कमपि स्वप्नं पश्यति स्वप्नान्पदार्थान्तरान्वा न पश्यति तादृशस्थानविशेषाय धावति । तादृशस्थानविशेषं प्राप्य सर्वथा सुखीभवति न तु जागरितस्वप्नस्थानप्रयुक्तदुःखी न भवति सर्वथैव स्थानद्वयदुःखरहितो भवतीति भावः ॥१९॥

**ता वा अस्यैता हिता नामनाड्यो यथा केशः सहस्रधा भिन्न-स्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिवन्तीव हस्तीव विच्छाययति गर्त्तमिव पतति । यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ**

ननु क्वचित् स्थानविशेषे जीवस्य स्वदुःख भवति क्वचित् स्थान-विशेषे तन्न भवतीति तत्र को हेतुरिति शंकायां स्थानवैषम्यकृतमेव तदिति द्योतयितुमाह—

(ता वा अस्यैता हिता इत्यादि) ता एलाहितानाम नाड्यो भवन्ति यथाकेशः सहस्रधा भिन्नः तावताऽणिम्नास्तिष्ठन्ति केशादप्यतिशयेन सूक्ष्मामास्तानाड्यः शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णास्ताः केशसहस्रभागादपि सूक्ष्मा अन्नरसादिपूर्णास्तानाड्यो भवन्तीति । यत्र नाड्यांस्थितमेनं जीवं केचन घ्नन्तीव केचन जिनन्तीव-भवन्ति । हस्ताय विच्छाययति विद्रावयतीव भवति गर्तं पततीव भवति। विविधभयेन पीडित इव भवति ।

(यदेवेत्यादि) यत् जाग्रद् भयं पश्यति जागरितकाले यदेव यदेव भयकारणं हस्तिव्याघ्रादिकं साक्षात्करोति । तत्सर्वमेवात्र नाडीमध्ये अविद्यया कर्मणा मन्यते प्राप्नोति । यथा जागरणकाले भयसाधने पश्यति तादृशमेव भयसाधनं कर्मबलात्तत्रापि पश्यति । हितनामकस्वप्नवह नाडीमध्येऽस्थितस्य जीवस्य कर्मसम्बन्धस्य विद्यमानत्वात् तद्वतेन भीषण-स्वाप्निकपदार्थानां प्रतिभानं भवत्येवेति भावः ।

(अथ यत्र देव इत्यादि) अथानन्तरं यत्र यस्मिन् स्थाने जीवो देव इव राजवत् । राजा इव महाराजवत् वा अहमेवेति सर्वोऽस्मीति मन्यते ।

( स यथा कुमारो वा महाराजोवेत्यादि ) बालाकिब्राह्मणोक्त-प्रकारेण यादृशस्थानविशेषे वर्तमानस्य जीवस्यानन्दविशेषस्यानुभवो

यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥२०॥

तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् तद्वा

भवति स भिन्नानुकूलप्रतिकूलवस्तूनामनुपलम्भमूलको भवति सोस्यजीवस्य परम उत्कृष्टो लोको मुख्याश्रयः परमेश्वर एवेति भावः ॥२०॥

( तद्वेत्यादि ) तत् तदा तस्मिन्कालेऽस्य अतिच्छन्दा । छन्दः शब्दस्येच्छावाचकत्वम् । ततश्च यथेच्छम् अपहतपाप्माभयम् पापभयादिरहितं परमप्रियं प्राप्यं रूपम् परमेश्वर एव नान्य इति । एतावता किमभूत्तत्राह—

(तद्यथा प्रिययेत्यादि) तद्यथा येन प्रकारेण प्रियया मनोनुकूलया स्त्रिया पत्यासंपरिष्वक्तो गाढमालिंगितो बाह्यं वस्तुजातं न जानाति आन्तरमपि न किमपि जानाति तदासक्तत्वात् एवमेव तथैवातिप्रियेण प्राज्ञेन परमेश्वरेण सम्परिष्वक्तस्तद्रूपतां प्राप्तः अत्र परमेश्वरेण सम्परिष्वंगस्तस्मिन् सर्वनिदाने लय एव । ततश्च परमेश्वरे लीनो जीवः न बाह्यं वेद विजानाति अन्तरमेवविजानाति । परमात्मनि लीनस्य जीवस्य बाह्याभ्यान्तर ज्ञानाभावो भवतीति । अथवा जागरित स्वप्नीयभोगप्रयोजनक शुभाशुभकर्म विरोधी सम्बन्धविशेषः सुषुप्तिकाले भवतीति ।

(तद्वाऽस्येत्यादि) अस्यजीवस्यपरमेश्वरलीनस्यतदेव रूपं प्राप्यम् यत् रूपं परमात्मलक्षणम् आप्तकामं प्राप्तसर्वकामनामयम् । समवाप्तसमस्तकाममित्यर्थः । आत्मकामम् आत्माभिन्न समस्तकामनारहितम् । अकामम शोकान्तरम् सर्वशोकशोकप्रयोजकबहिर्भूतम् । प्रकृतेऽन्तरशब्दस्य बहिर्योग-

**अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् ।।२१।।**

**अत्र पिताऽपिता भवति माताऽमाता लोको अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽताप-**

वचनत्वात् । एतादृशपरमात्मलक्षणरूपमेवजीवस्य परमप्रियं प्राप्यं च। सर्वलोकाभिरामं लोकोत्तरं साकेताधिपतिमवाप्यैवजीः कृतार्थो भवतीति भावः ।।२१।।

( अत्रपितेत्यादि ) अत्र परमेश्वरलक्षणसुषुप्तिस्थाने संप्रलीनस्य जीवस्य पिता जनकोऽपिताऽजनको भवति । पितुर्हि प्रकृतपाचभौतिक शरीरेणसहैवजनकताख्यः सं च सम्बन्धः सम्बन्धिन एकस्य पांचभौतिक-स्याभिमानाभावात् विनष्ट इति शरीरद्वाररेण संबन्धस्यपितुरपि पितृत्वं लीनजीवं प्रतिनिवर्ततेऽतः कथितं पिताऽपिता भवतीति । एवं तत्काले माता जननी अमाता जननी न भवति पुर्वोक्तयुक्तेरेवेति । लोका अलोका भवन्तीति । लोका भूरादयः परमेश्वरलक्षणसुषुप्तौ वर्तमानस्यजीवस्यालोका भवन्ति । बाह्याभ्यन्तराश्रयशून्यत्वात् तत्कालिकजीवस्येति । देवा अदेवाः देवाइन्द्रादयोऽदेवाअनुपास्या भवन्ति । अयं भावः शरीरसम्बन्धवानेव जीवः स्वर्गादिप्राप्त्येदेवोपासन यज्ञादि द्वारेण करोति परमात्मा निलीनस्य तु शरीरसंबन्धा भावात् शरीरोपास्यादेवा अनुपास्यत्वात् अदेवा भवन्तीति। वेदा अवेदा भवन्ति । हिताहितवस्तुनिवोधकतया वेदादिशास्त्रमनुशासकभवति जीवस्तनुशासनीयोभवति संप्रति अननुशासनीयस्वरूपत्वात् वेदाः शासका-अपि अवेदा अशासका एवेति । अत्रास्यामवस्थायां परमात्मलीनः स्तेनः छन्नो भूत्वा परद्रव्यापहारी अस्तेनोऽचौरो भवति । परिशुद्धात्मस्वरूपे तस्मिन् स्तैन्यकार्यं प्रति कर्तृत्वस्यासम्भवात् । भ्रूणहा गर्भविनाशकर्ता अपि अभ्रूणहा भवति पूर्वोक्तयुक्तिरेव । चाण्डालो निष्कृष्टजातीयोपि अचाण्डालो

**सोनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति ॥२२॥**

भवति जातेर्देहसम्बन्धत्वात् । देहाभिमानस्य तदा तस्मिन् अभावात् पौल्कसो जातिविशेषवान् अपौल्कसो भवति । श्रमणः परित्यक्तपुत्राद्येषणः परिव्राडपि अश्रमणो भवति । तापसो वानप्रस्थाश्रमविशेषोऽप्यतापसो भवति । तपः प्रभृतिप्रति तदानीं तस्य कर्तृत्वासम्भवादिति । पिताऽपिता भवतीत्यारभ्य तापसोऽतापसोभवत्यन्तवाक्ये हेतोरकथनात् हेतुविशेषं दर्शयितुमाह–

(अनन्वागतमित्यादि) सुषुप्त्यवस्थायां जीवः पुण्येनानन्वागतं पुण्य-कर्मणा संबद्धो न भवति एवं पापेनाननन्वागतं पापकर्मणापि संबद्धो न भवति । शरीरेन्द्रियसम्बन्धप्रयोजकपुण्यपापाख्यकर्मणोरसंम्बन्धात सुषुप्त्यवस्थायां जीवस्य पित्रादयोऽपित्रादयो भवन्तीति भावः । ननु यदाऽन्तिमशरीरस्य वियोगः स्यात् तदैव सर्वकर्मणां वियोगः स्यात् नान्यथा । अन्यथा तदानीमपि कर्माभावे सुषुप्तस्य पुनरुत्थानं न स्यादिति प्रयत्नमन्तरेणैव संसाराभावः प्रसज्येत तत्कथं सुप्तौ कर्मसम्बन्धाभावो जीवस्येतीमां शंकामपनेतुमाह–

(तीर्णो हि तदेत्यादि) तदा सुषुप्तिसमये जीवो हृदयस्य सर्वान् शोकान् शोकप्रयोजकान् तीर्णो भवति मनस्तापरूपफलाभावात् । यद्यपि तदानीमपि बीजरूपेण कर्म विद्यते एव तथापि कर्मणां फलाभिमुखत्वाभावे न कर्मणामसम्बन्धतुल्यत्वात् तत्प्रयोज्यशरीराद्यभावेन शरीरसंबन्धिमाता-पितृलोकादयो न भवन्तीति भावः ॥२२॥

ननु ज्ञातृलक्षणजीवस्य सुषुप्त्यवस्थायां बाह्याभ्यन्तरज्ञानाभावो भवतीति प्राक् प्रतिपादितः किन्तु तस्य कारणं किमिति जिज्ञास्यमानं प्रत्याह–

यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥२३॥

यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥२४॥

(तद्वैतन्नपश्यतीत्यादि) तदानीं सुषुप्तिसमये बाह्यमान्तरं वा किमपि न पश्येत् सामग्रीविरहात् । तत् साक्षात्कुर्वत एव बाह्यस्यान्तरस्य वा पदार्थस्यादर्शनम् । यतो ज्ञातुरात्मनो धर्मलक्षणस्य ज्ञानस्याविनाशित्वात् नित्यत्वात् । यदा धर्मी आत्मा नित्यस्तदा तद्धर्मभूतं ज्ञानमपि नित्यमेव धर्मधर्मिणोरभेदात् । अतो ज्ञानस्वरूपाभावप्रयोज्यो बाह्याभ्यन्तरं द्वितीयज्ञानस्यातो न कथमपि भवति । किन्तु ततोऽविभक्तस्य प्राज्ञात्मनः पृथक्सिद्धस्यान्यपदार्थस्याभावादेव कारणात् अनुकूलप्रतिकूलपदार्थानामदर्शनं भवतीति । न च पृथक्सिद्धपदार्थानामभावो जाग्रत्स्वप्नयोरपि सम एवेति :जाग्रत्स्वप्नवत् सुषुप्तिकालेपि पृथक्सिद्धपदार्थानुभवोऽस्तीति वाच्यं जाग्रत्स्वप्नावस्थायां शुभाशुभकर्मरूपदोषबलात् पृथक् सिद्धपदार्थानामुपलम्भसम्भवेपि सुषुप्तिकाले शुभाशुभकर्मसम्बन्धस्याभावात् पदार्थोपलभस्यासंभवात् । न चापृथक्सिद्धतया ब्रह्मात्मकत्वेन विषयाणां घटपटप्रभृतीनामुपलम्भो भवतु इति वाच्यम् "एतं ब्रह्मलोकं न विन्दन्ति अनृतेन प्रत्यूढाः" इत्यादि श्रुत्यन्तरप्रदर्शितक्रमेण । अनृतपदप्रतिपादितकर्मविशेषतिरोहिततया ब्रह्मण उपलम्भासम्भवात् तत एव ब्रह्मात्मकत्वरूपेणापि पदार्थानामुपलम्भस्यापादयितुमशक्यत्वात् ब्रह्मरूपत्वाब्रह्मरूपत्वोभयरहितपदार्थान्तरस्यासम्भवेनाभावात् इति सूक्तं यद्वै तन्न पश्यति पश्यन्नै तन्न पश्यतीत्यादि ॥२३॥

यद्वैतन्नजिघ्रतीत्यारभ्य यद्वैतन्नविजानातीतिमन्त्रपर्यन्तमन्त्रायद्वैतन्न

यद्वै तन्न रसयते रसयन्वै तन्न रसयते न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥२५॥

यद्वै तन्न वदति वदन् वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥२६॥

यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यते विनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणयात् ॥२७॥

यद्वै तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥२८॥

यद्वै तन्न स्पृशति स्पृशन् वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् स्पृशेत ॥२६॥

यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥३०॥

पश्यतीत्यादि मंत्रवदेव भावार्थमात्राविष्करणेन व्याख्येयाः ॥३०॥

ननु यथा सुषुप्तिसमये परमात्मपृथक्सिद्धपदार्थानामभावेन ज्ञानकरणचक्षुरादीनामभावेन च बाह्याभ्यन्तरपदार्थोपलम्भो न भवति न तथा

**यत्र वाऽन्यादिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ।।३१।।**

**सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैन-**

स्वप्नादिस्थाने यतस्तदा तत्पृथक्सिद्धपदार्थसद्भावात् ज्ञानकरणस्य सद्भावाच्चेत्याशयेनाह–

(यत्र याऽन्यदिव स्यादित्यादि) यत्र यस्मिन्स्थाने जाग्रदादौ । अन्यदिवस्यात् परमेश्वरात् पृथक्सिद्धमल्पं वा वस्तु दृश्यं कर्मीभूतंभवेत् । तथा ज्ञानकरणमिन्द्रियादिकं च पृथक् सिद्धमिव भवेत् । तदा तत्र स्वप्नस्थानादौ । अन्यः कर्ता अन्यत्किंचित् दृश्यं कर्मलक्षणं केनचित् ज्ञानकरणेन चक्षुरादिना पश्येत् साक्षात् कुर्यात् । एवमन्योऽन्यद् दृश्यं पृथक्सिद्धं गन्धादिकं जिघ्रेत् घ्राणेन गन्धज्ञानमुत्पादयेत् । अन्योऽन्यत् रसादिकं रसयेत् रसनया साक्षात्कारं कुर्यात् । वदेत् शृणुयात् मन्वीत विजानीयादपि पृथक्सिद्धावस्थायाम् । सुषुप्तौ तु परमात्मपृथक्सिद्धदृश्यपदार्थानामभावात् कर्मणां भोगप्रदत्वाभावे सकारणभूतेन्द्रियादिसम्बन्धानामभावादपि अन्यदृश्यवस्तुनो दर्शनादिकं न भवति । तदयं निर्गलितोऽर्थः प्रकरणस्य । यत्र खलु परमात्मपृथक्सिद्धवस्तुनः सत्वमिन्द्रियादिकं कर्मणि भोगप्रदत्वं तत्र पदार्थानामुपलम्भो भवति यत्र तु सुप्तौ नैवं तत्र ज्ञातृधर्मभूतज्ञानस्य विद्यमानत्वेपि पदार्थोपलम्भो न भवतीति ।।३१।।

(सलिल एक इत्यादि) सलिलो जलवदतिशयेन स्वच्छः द्रष्टा जीवोऽद्वैतो भवति । अयं भावः यथा जलराशौ प्रक्षिप्तं जलमेकमेकरूपतामेव याति तथैव जलवत् स्वच्छस्वभावे परमेश्वरे लीनो जलबिन्दुवत् जीवो द्रष्टा प्राज्ञात्मपरिष्वंगात् एकीभूतः सन् अद्वैतो भवति अर्थात् परमात्मपरिष्वंगात् पूर्वं देवमनुष्यादिविविधाकारेणाकारवानासीत् तं

**अनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपदे-षोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्या-न्यानि भूतानि मात्रामुपजीवन्ति ।३२।।**

चाकारविशेषमपहाय परमात्मैकरूपतामादधानो द्वैतो भवति । अयमेव विशिष्टाद्वैतस्योद्गार इति । एषः सुषुप्त्याधारो ब्रह्मलोकः परमा । हे सम्राडित्येवं प्रकारेण याज्ञवल्क्यो जनकमनुशशासानुशिष्टवान् उपदेशं दत्तवानिति यावत् । अथ कथं सुषुप्त्याधारः परमेश्वरो ब्रह्मलोको यतो ब्रह्मलोकप्राप्तेरेव परमगतित्वश्रवणात् तत्राह "एषास्य परमा गतिः" अस्य कृतकर्मणो जीवस्य एषा अर्चिरादिमार्गेण प्राप्तिर्ब्रह्मलोकप्राप्तिरेव परमा परमोत्कृष्टा गतिः । आराधितसर्वसाधनस्य ब्रह्मलोकप्राप्तिरेव परमा गतिरर्चिरादिमार्गक्रमेण गमनाद्भवतीति भावः । एषास्य परमा सम्पत् । तत्त्वज्ञानाद्विना ब्रह्मलोकप्राप्तिरेवास्य जीवस्य परा सर्वत उत्कृष्टा सम्पदिति । एषोस्य परमो लोकः । अस्य जीवस्य एषः परमेश्वर एव परमो नित्यो लोकः भोगस्थानम् । अमुमेव भोगस्थानविशेषमभिलक्ष्यैव श्रुत्यन्तरं "न स पुनरावर्तते ।" अपि भवति एषोस्य परमानन्दः अस्य जीव एषः परमेश्वर एष परमानन्दो निरतिशयानुकूलः । ननु यदि ब्रह्मैव परमान्तस्तदा कथं स्वर्गाद्यनुकूलभोग्येषु जाग्रत्सु कथमानन्दानुभवो जीवस्य तत्राह–

(एतस्यैवेत्यादि) एतस्यैवानन्दस्य परमानन्दस्य मात्रां लेशमात्रमन्यानि भूतानि अन्ये जीवा उपजीवन्ति । अयमाशयः आनन्दोदधिकल्पो भगवानेव तस्यैवानन्दस्य लेशतारतम्येन स्वर्गादिषु अनुकूलभोग्यानुभवो भवति । वस्तुतस्तु ब्रह्मप्राप्तावेवानन्दामनुभवति । स्वर्गादिविषयसम्पर्कजनितसुखानुभवितारस्तु सर्वेपि परमात्मानन्दसहस्रांशस्यानुभवकर्तार एवेति ।।३२।।

तस्य परमेश्वरानन्दस्य निरतिशयपरमानन्दतां द्योतयितुं सातिशया-

**स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा**

नन्दं प्रपञ्चयति—

(स यो मनुष्याणामित्यादि) मनुष्याणां नराद्यभिमानिनां मध्ये स यः कश्चित्पूर्वपूर्वतरभवोपार्जितकर्मसंघबलात् राद्धो भोगक्षमैर्युवत्यादिभिरन्यैश्च गुणैः संसिद्धः समृद्ध इत्यर्थः तथा बाह्यैर्भोगसाधनैः स्रक्चन्दनवानितादिभिः समृद्धः यदि पूर्णो भवति तथा अन्येषां स्वेतराणां मनुष्याणामधिपतिः स्वतन्त्रो भवति न तु कस्यचिदितरस्याज्ञायां वर्तमानो भवति। तथा सर्वैर्मानुषभोगैः सम्पन्नो भवति मनुष्यो भवैः सर्वभोगैर्भोगोपकरणैरतिशयेन सम्पन्नो युक्तो भवति। स एतादृशो मनुष्याणां मध्ये य आनन्दः स परमानन्दः श्रेष्ठतम आनन्द एकः । अथ मनुष्याणां ये शतं शतसंख्यका आनन्दाः स जितलोकानां पितॄणामेक आनन्दः तत्र जितः श्राद्धतर्पणादिकर्मद्वारा पितृतोषणात् प्राप्तो लोकः पितृलोको यैस्ते जितलोकाः तेषामानन्दो मनुष्यानन्दस्य शतगुणितस्य समानः। अथ ये जितलोकानां पितॄणां शतं शतसंख्यका आनन्दाः स गन्धर्वलोकानामेक आनन्दः । अथ ये शतं शतसंख्यका गन्धर्वलोके आनन्दाः स एक आनन्दः कर्मदेवानाम् । के कर्मदेवास्तत्राह

(ये कर्मणेत्यादि) ये केचन कर्मणा श्रौताग्निहोत्रादिना कर्मविशेषेण देवत्वमभिसम्पद्यन्ते देवभावमासादयन्ति ते कर्मदेवा इति कथ्यन्ते। गन्ध-

**देवत्वमभिसम्पद्यन्ते अथ ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये**

र्णानन्दस्य शतगुणितस्यैकः कर्मदेवानन्दः । अथ ये कर्मदेवानां शतमानन्दाः स एक आनन्द आजानदेवतानाम् स्वभावसिद्धदेवानां सृष्टयादौ जायमानानाम् । यः श्रोत्रियः श्रुतवेदान्तः अवृजिनो निष्पापः तत्र वृजिनं पापं न विद्यते वृजिनं पापं यस्य स अवृजिनाऽपापः अकामहतः न केनापि कामेनहत्तो मुक्त इव वर्तमानः यद्यपितुमुक्ताजानदेवानन्दयोर्महत्तारतम्यं विद्यते तथापि तदानन्दे न्यूनता नास्तीति । अयमभिप्रायः देवो द्विविधः कर्मदेवआजानदेवश्च तत्र कल्पादावेव जायमानो यष्टव्य इन्द्रवरुणादिः स आजानदेवः यश्च कर्माराधनद्वारा देवभावमासादयति स कर्मदेवः देवलोकं याति तत्रत्यसुखमश्नुते न तु जात्या देवः स कर्मदेवः । अथवा यः त्रयस्त्रिंशत्देवसायुज्यमाप्नोति स कर्मदेवः त्रयस्त्रिंशद्देवलक्षणत्वमाजानसिद्धत्वमिति । तदेवं कर्मदेवाजानदेवयोर्भेदः तयोरानन्दयोरपि यथाशास्त्रं भेद इति । अथ ये ते आजानदेवानां शतमानन्दाः शतसंख्यका आनन्दाः स एक आनन्दः प्रजापतिलोकीयः अत्र प्रजापतिपदं चतुर्मुखकमलासनलोकपरकम् । न तु दक्षादिप्रजापतिलोकपरकम् । तथा सति एकवचनप्रयोगस्यासाधुता स्यात् । चतुर्मुखलोकपरत्वे तु अपूर्वापरयोः श्रुत्यन्तरस्य च कश्चित् विरोधो भवति ।

(श्रोत्रिय इत्यादि) पदानां पूर्वोक्ता एवार्थाः ज्ञातव्याः । अथ ये प्रजापतिलोके शतमानन्दाः स एको ब्रह्मलोके आनन्दः । न चैवं देवादीनामानन्दादिवत् ब्रह्मानन्दस्यापि परिच्छिन्नत्वं स्यात् मनुष्यापेक्षया देवानन्दस्य शतगुणाधिक्येपि परिच्छिन्नत्ववत् ततश्च निरतिशयानन्दत्वेनैवभवेदिति वाच्यं प्रजापतिलोकापेक्षया शताधिकत्वकथनस्याधिक्यमात्रे तात्पर्यात् नतु शतत्वादिपरिच्छेदे । यथा इषुरिव सविता या पतीति वाक्यं सूर्यगतौ मन्दतानिवृत्तिपरकम् निमेषमात्रेणानेकयोजनधावित्वस्य

**शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक-आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियो-ऽवृजिनोऽकामहतोऽथैष एव परम आनन्दः एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं**

प्रमाणसिद्धत्वात् । तथैव प्रकृतवाक्यस्यापि कमलासनानन्दापेक्षया आधिक्यमात्रे एव तात्पर्यात् । न ब्रह्मानन्दस्य परिच्छिन्नत्वशंकापि न सम्भवतीति । अथवा "रोमकूपेष्वनंतेषु ब्रह्माण्डानि भ्रमन्ति ते । अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ।। ईदृशानां तथा तत्र कोटि कोट्ययुतानि च । गंगायां सिकताधारा यथा वर्षति वासवे ।। शक्या गणयितुं लोके न व्यतीताः पितामहाः ।।" इत्यादिशास्त्रेभ्यो ब्रह्माण्डानां तत्र तत्र तन्नियामकानां चतुर्मुखानां चासंखेयत्वदर्शनात् । नियम्यानन्दापेक्षया नियामकानन्दः शतगुणाधिको भवतीति तत्र प्रतिपादितमिति अनन्तगुणिताधिकेभ्यश्चतुर्मुखेभ्यः शतगुणानन्दस्य ब्रह्मणः कथनात् भगवतः साकेताधिपतेरानन्दस्यार्थत एवापरिच्छिन्नत्वमिति । किं बहुना यस्यानन्दस्य लेशमात्रमन्ये आनन्दाः तदानन्दस्य निरतिशयत्वे किमिव वक्तव्यमिति । विशेषत एतत्तलमानन्दमयाधिकरणे द्रष्टव्यं विस्तरभयादत्र न प्रपञ्च्यते । यश्च श्रोत्रिय इत्यादि विशेषणत्रयं पूर्ववदेव व्याख्येयम् । अथैष एव परमानन्दः मनुष्यानन्दादारभ्य शतगुणशतगुणाधिकतया प्रतिपाद्यमान आनन्दविशेष एव परमानन्दो निरतिशयः सर्वलोकोत्तरः एषः प्रदर्शित आनन्द एव ब्रह्मलोकः ब्रह्मणः साकेताधिपतेरानन्दः । एवं प्रकारेण याज्ञवल्क्यो हे सम्राडिति सम्बोध्योवाच प्रोवाच जनकं प्रति । स च जनको विदेहस्तद्वचनं श्रुत्वा तदुक्तं सर्वमवधार्य प्रोवाच हे भगवन् ! सोहं ज्ञाततत्त्व इवाहं भगवते

**विमोक्षायैव ब्रू हीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति ।।३३।।**

**स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ।।३४।।**

पूजावते गवां सहस्रं दक्षिणारूपेण ददामि प्रतिपादयामि । त्वं चात ऊर्ध्वमतः परं विमोक्षाय संसारसागरोत्तरणाय साधनविशेषं ब्रूहि कथयेति ।

(अत्र हेत्यादि) अत्र पुनः प्रश्ने याज्ञवल्क्यो ऋषिः । अयं राजा जनको मेधावी मेधातिशययुक्तो मां सर्वेभ्योऽन्येभ्यः प्रश्नेभ्य उदरौत्सीत् उपरोधं कृतवान् इत्येवं विभयांचकार भयंप्राप्तवानिवाभवत् । अयं राजा सर्वानेव प्रश्नान् प्रष्टुमुपक्रान्तो न मां कथंचिदपि त्यक्ष्यतीति भयभीत इव जात इत्यर्थ इति ।।३३।।

सम्प्रति जीवस्य जाग्रत् देशादपि उत्क्रमणं प्रतिपादयितुं स्वप्नान्तेऽवस्थापि तस्य जीवस्य बुद्धांते सञ्चरणं दर्शयितुमाह–

(स वा एष इत्यादि) यद्वा यथा जाग्रद्दशातो जीवः स्वप्नस्थाने गच्छति स्वप्नदशातो बुद्धान्ते आगच्छति तथा कदाचित् दशातः शरीरमिदं परित्यज्य देहान्तरं प्रत्यपि गच्छति इति वर्तमानदेहेऽवस्थाद्वयं दर्शयित्वा देहान्तरगमनं दर्शयितुं पातनिकामवतारयति–

(स वा एष इत्यादि) स वा एषो जीव एतस्मिन् स्वप्नान्ते स्वप्नस्थाने रत्वा चरित्वा विहरणादिकार्यं सम्पाद्य पुण्यं पुण्योपनीत स्रकचन्दनादि पापं पापोपनीतं वीभत्सभयानकादिपदार्थजातं दृष्ट्वा साक्षात्कृत्य पुनः पुनरपि प्रतिन्यायं यथा स्वप्नान्ते गतस्तद्विपरीतक्रमेण बुद्धान्तायप्रतियोन्याद्रवति आगतो भवतीति ।।३४।।

**तद्यथा नः सुसमाहितमुत्सर्ज्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढमुत्सर्जंद्याति यत्रैतदूद्ध्र्वोच्छ्वासी भवति ।।३५।।**

कथमयं जाग्रद्देशं परित्यज्य याति तत्रानुरूपं दृष्टान्तं दर्शयन्नाह-

(तद्यथाऽन इत्यादि) यथा येन प्रकारेण अनः शकटं सुसमाहितम् सु सम्यक् समाहितम् भाण्डाद्युपकरणेन पूरितम् सत् उत्सर्जनपूर्वपूर्वदेशं परित्यजत् याति अग्रिमाग्रिमदेशं प्रति गच्छति यथा वा कश्चित् पुरुषः शिरसिन्यस्तभारो भारं वहन्नेव पूर्वदेशेन विभागं कुर्वन् उत्तरोत्तरदेशसंयोगं कुर्वन् प्रयाति एवमेव तथैवायं शकटस्थानीयोयं पुण्यपापादिभारवान् तद्व-हनाय शारीरः शरीरे कृतावास आत्मा जीवः प्राज्ञेनात्मना परमेश्वरेण-सारथिस्थानापन्नेनान्वारूढः नियम्य नियामकात्मकसम्बन्धविशेष प्राप्य तेन प्रेरितः सन् तथोक्तं "अज्ञो जन्तुरनीशोयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा" एतादृशो जीवो भारक्रान्त ईश्वरप्रयुक्तः सन् उत्सर्जन् पूर्वशरीरं परित्यजन् याति शरीरान्तर्ग्रहणाय । पूर्वपूर्वतरदेहादिभिर्यानि यानि कर्माणि कृतवान् तत्तत्कर्म समुदायमादाय त-द्भाराक्रान्तः परमात्मप्रेरितः परमात्मदर्शितमार्गेण शरीरं पूर्वं परित्यज्य देहान्तरोपादानाय गच्छतीति भावः । कदा स जीवः पूर्वोपात्तदेहं परित्यज-न्नपरदेहग्रहणाय गच्छति तत्राह-

(यत्रैतदित्यादि) यत्र यस्यामवस्थायामयं जीवो भूम्यादौ शयान ऊर्ध्वोच्छ्वासी ऊर्ध्वश्वासवान् भवति । शरीरपरित्यागात्पूर्वमर्द्धहोराहो रात्मकं वा कालं जीवनयोनिप्रयत्नसाध्यश्वासं गृह्णाति ततश्च तदव्यव-हितोत्तरकाले शरीरमिमं त्यजति जीव इति ।।३५।।

**स जीवो यदा यस्मिन् काले अणिमानं शरीरस्य कृशतां नेति प्राप्नोति । कृशत्वप्राप्तिरेव कुतस्तत्राह-**

**स यत्रायमणिमानं न्येति जरया वोपतपतोवाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्या-**

(जरयेत्यादि) जरया वार्द्धक्येन । उपतपता वा ज्वरादिरोगेण वा अणिमानं शरीरस्य कृशत्वं निगच्छति तस्मिन्काले ऊर्ध्वोच्छ्वासी शरीर-मुत्सर्जन् यातीति ।

( उपतपति अनेनेति ) उपतापो रोगो ज्वरादिकः वार्द्धक्येन ज्वरादिना वा तप्यमानस्य पुरुषस्य जाठराग्निर्दुर्बलो भवति । ततश्च सम्यक् पाचनक्रियाया अभावात् भुक्तमन्नादिकं न जीर्यति तदभावे रसनिष्पत्तिर्न भवति तदभावे च रुधिरक्रमेण मांसमज्जादिधातूनामुपचयो न जायते प्रत्युत संचितधातूनामपक्षयो भवति ततश्च कारणाभावेन शरीरमति-कृशभावं गच्छति । तदेत् शरीरकार्श्यं वृद्धावस्थया वह्निमान्द्येन जायते मध्ये वा ज्वरादिना वह्निमान्द्ये सति वा भवति । शरीरकृशत्वे चोर्ध्व-श्वासी ततश्च शरीरत्याग इति भावः । पूर्वशरीरं कृशत्वात् जीर्णत्वाद्वा-त्यजति तत्र दृष्टान्तं दर्शयितुमाह—

(तद्यथाम्रमित्यादि) तद्यथा येन प्रकारेण आम्रफलं रसालफलं वा उदुम्बरेवोदुम्बरफलं वा पिप्पल वा पिप्पलफलं वा बन्धनात् स्वसम्बद्ध-शाखाग्रभागात् प्रमुच्यते कालवशेनातिजीर्णत्वात् प्रभञ्जनवेगाद्वा प्रमुच्यते पतितं भवति । वृन्तात् प्रकारद्वयेन फलस्य पतनं भवति कालवशेन पक्वफलं पतति असमयेन विपरीतपवनान्दोलनाद्वा । एवमेवायं पुरुषः शिरःपाण्यादिमान् पिण्डः प्राणादिकरणग्रामसहित एभ्योंऽगेभ्यः पाण्यादिलक्षणेभ्यः संप्रमुच्य मोक्षं वियोगं प्राप्य पुनः पुनरपि प्रतिन्यायं प्रतियोन्या द्रवति ब्राह्मणादियोनिं प्रति आद्रवति गच्छति प्राणायैव-जीवनाय । तथा च श्रुत्यन्तरम् "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।

**द्रवति प्राणायैव ॥३६॥**

**तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति ॥३७॥**

स्याणुमन्येऽनुसज्जन्ति यथा कर्म यथा श्रुतम् ॥" श्वयोनिं वा शूकरयोनिं वेत्यादि ॥३६॥

पुनरपि दृष्टान्तान्तरं दर्शयति—

(तद्यथा राजानमित्यादि) यथा येन प्रकारेण राजानं राज्यसिंहासनेऽभिषिक्तम् आयान्तम् । राजा आगच्छतीति श्रुत्वा तस्मिन् राष्ट्रे वर्तमानाः सर्वेपि उग्रा जातिविशेषाः क्रूरकर्माणो वा प्रत्येनसः प्रति एनसि पापकर्मणि कुत्सितकर्मणि विनियुक्तास्तस्करादिदुष्टकर्मणि विनियुक्ताः सूतग्रामण्यः सूताः वर्णसंकरविशेषाः ब्राह्मण्यां क्षत्रियात् जात इति स्मृतिप्रसिद्धाः ग्रामण्यो ग्रामनेतारो ग्रामप्रमुखाः एते सर्वे कृताभिषेकस्य राज्ञः पूर्वमेवागमनं ज्ञात्वा अन्नैर्भोज्यभक्ष्यलेह्यचोष्यादिप्रभेदभिन्नैर्विविधैर्भोग्यैः पानैर्जलदुग्धादिभिः आवसथैः कृततोरणादिशोभाविशेषविशेषितैः प्रासादादिभिः अयं राजा आयाति आगच्छतीति परस्परं कथयन्तः प्रतिकल्पंते आयान्तं राजानं निष्पन्नपदार्थैरेव प्रतीक्षां कुर्वन्ति । एवमनेनैव प्रकारेण एवं विदम् अत्र प्रस्तुतमत्र कर्मफलं तदेवात्र एवंपदेन परामृष्टं भवति एवंवित् शब्दस्तु तल्लब्धपुरुषपरकः कर्मफलवेत्तारं संसारिणम् । सर्वाणि भूतानि । एतद् भोगोपकरणलक्षणशरीरसाधनानि सर्वाणि भूतानि तत्तत्कर्मप्रयुक्तानि- कर्मफलोपभोगसाधनैः सहैव इदं ब्रह्मायं जीव आयातीति आगच्छतीति कृत्वा प्रतिकल्पं ते प्रतीक्षमाणा भवन्तो भवन्ति । यदाऽयं प्रकृतशरीरं त्यजन्नेव भवति तत्समनन्तरकालमेव शरीरान्तरभोग्यभोगस्थानभोगोपकरणादीनि सर्वाण्यपि भगवतः संकल्पवशेन प्रतिपुरुषं संपूर्णानि भवन्तीति भावः । अथवा यथोक्तसंसरणप्रकारविदः

**तद्यथा राजानं प्रतियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ।।३८।।**

**इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य तृतीयं ब्राह्मणम् ।।३।।**

सर्वभूतोपजीव्यत्वफलं भवतीति भावः ।।३७।।

शरीरान्तरं प्रतिजिगमिषुं जीवं सह के को गच्छन्ति तत्राह—

(तद्यथा राजानमित्यादि) तद्यथा येन प्रकारेण राजानमभिषिक्तं प्रपिपासन्तं प्रकर्षेण शरीरान्तरं प्रतिगन्तुमिच्छन्तम् उग्रा जातिविशेषा क्रूरकर्माणो वा प्रत्येनसः तस्करादिदण्डादौ विनियुक्ताः सूतग्रामण्यः सूता-वर्णसंकरविशेषा ग्रामनेतारश्च अभिसमायन्ति राज्ञां पुरः समुपस्थिता भवन्ति गच्छति राजेति जानानः एवमेवेममात्मानं शरीरनेतारं जीवं प्रति अन्तकाले मरणसमये सर्वे प्राणा वागादिप्रमुखाः अभिसमायन्ति तदाग्रे एवोपस्थिता भवन्ति गमनाय । यत्र यस्यामवस्थायामयं मरिष्यन् जीव ऊर्ध्वोच्छ्वासी ऊर्ध्वश्वासवान् भवतीति ।।३८।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
तृतीयं ब्राह्मणं समाप्तम् ।।३।।

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાઽજ્ઞાનકીનાથો વેદવ્યાસો મહામતિઃ॥

# अथ चतुर्थाध्यायस्य चतुर्थः ब्राह्मणः ॥४॥

**स यत्रायमात्माऽबल्यं न्येत्य सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्वव-**

पूर्वपादे एभ्योंऽगेभ्यः समुच्यत इति कथितम् तत्र संप्रमोक्षणं नाम किमिति विस्तरेण तद्वर्णयितुमुपक्रमते—

(स यत्रायमित्यादि) सोयमात्मा देहकरणाद्युपाधिको जीवो यत्र यस्यामवस्थायाम् । आबल्यं न्येत्य । अबलस्य भाव आबल्यम् बलाभाव-वत्त्वम् संप्राप्य नितरां प्राप्य तदनन्तरं सम्मोहमिव न्येति प्रतिपद्यते । तत्र सम्मोहोनाम मरणायार्धसम्पत्तिमूर्छेत्यर्थः । न चेयमवस्था जागरिते समाविष्टा भवति इन्द्रियद्वारेण विषयानीक्षणात् नापि स्वप्ने संज्ञारहितत्वात्स्व-प्नान्न पश्यति । न वा मरणे देहे तदानीं प्राणोष्मणोः सद्भावात् । नापि सुषुप्तौ तद्वैलक्षण्यात् । सुषुप्तौ हि निमीलितनेत्रः सुप्रसन्नवदनश्च भवति अयञ्च तद्विपरीतः अतोऽर्धमरणं सम्मोहः मरणं हि सर्वप्राणवियोगः सर्व-प्राणवियोगोपक्रमकतिपयप्राणसम्पत्तिर्मूर्च्छा । तत्र क्वचित् कर्मशेषे विद्यमाने सति औषधादिप्रयोगेण प्राणोष्माणौ प्रत्यागच्छतः असति कर्मविशेषे तौ गच्छतः अतोऽर्धसम्पत्तिरेव मूर्छेति । एतादृश सम्मोह प्राप्नोति । ततश्चैनं मरणोन्मुखमात्मानं जीवम् । एते प्राणा वागादयोऽभि-समायन्ति जीवस्यातिसमीपमागच्छन्तीति । स मरणोन्मुखो जीव एता तेजोमात्राः प्रकाशकांशका वागादीन्द्रियाणि । समभ्याददानाः सम्यक् गृह्णन् । यद्यपि स्वप्नसमयेपि जीव इन्द्रियाणां ग्रहणं करोति तथापि तत्र सम्यग् न भवति ।

( इह तु सवासनमिन्द्रियग्रहणमिति ) सर्वाण्येवेन्द्रियाणि समादाय जीवो हृदयं पुण्डरीकाकारमेवान्ववक्रामति । अन्वागच्छति । इन्द्रियग्राम-

**क्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्तते तथा रूपज्ञो भवति ॥१॥**

**एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकी-**

सहितो हृदये एवावतिष्ठते इत्यर्थः । स चाक्षुषः चक्षुषि सन्निहितः चाक्षुषो म्रियमाणो जीवः स एष पुरुषो यत्र यस्मिन्काले पराक् रूपादिविषय-परांमुखो भूत्वा हृदयदेशे पर्यावर्ततेऽवतिष्ठते । अथ तदनन्तरकालेऽयं जीवो रूपज्ञो भवति रूपज्ञानरहितो भवति ॥१॥

(एकीभवति) स्वप्नकाल इवेन्द्रियैः सहैकीभवति तस्मिन् समये नायं पश्यतीति तत्समीपवर्तिनो लोका आहुः कथयन्तीति । एवं यदा स पुरुषो विषयेभ्यः परावृत्तो भवति तदा इन्द्रियैः सहैकीभवतीति पार्श्वस्था एवं कथयन्ति यदयं न जिघ्रति न रसयते न विजानातीति ।

(तस्य हैतस्येत्यादि) ततः तस्य हैतस्य मरणासन्नपुरुषस्य यत् हृदयं तस्याग्रेऽग्रभागे प्रद्योतते प्रकाशमानं भवति । हृदयस्याग्रं नाडीमुखं यदादाय निर्गच्छति तत् नाडीमुखं संहृतेन्द्रियलक्षणकरणतेजसा प्रकाशयुक्तं भवति । तेन प्रद्योतनेन प्रकाशेन प्रकाशितद्वार एष आत्मा म्रियमाणपुरुषः निष्क्रामति निर्गच्छति शरीरात् विनिर्गतो भवति । केन द्वारेण स निर्गच्छति तत्राह—

(चक्षुष इत्यादि) चक्षुषः चक्षुर्द्वारेण शरीरं परित्यजति । कदाचित् मूर्ध्नो वा मूर्धप्रदेशात् निर्गतो भवति कदाचित् अन्येभ्यो वा शरीर प्रदेशेभ्यः शरीरे नवद्वाराणि सन्ति तत्रादृष्टबलात् जीवस्तत्तद्द्वारेण यथोक्तप्रकाशप्रकाशितेन याति यथाकर्म यथाश्रुतं तत्तद्योनिप्राप्तये इतिभावः । तं शरीरकरणाध्यक्षं जीवमुत्क्रामन्तं निर्गच्छन्तं शरीराद्बहिरेकान्ततया यान्तं

**भवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो**

प्राणो मुख्यप्राणो राज्ञो मंत्रीव अनूत्क्रामति । अनु पश्चात् शरीराद्बहिर्याति। ततः प्राणं मुख्यप्राणमुत्क्रामन्तं जीवानुगच्छन्तं सर्वे प्राणास्तदधीनवृत्तिका वागादयस्तदनु सर्वे अनुत्क्रामन्ति । यदा खलु जीवः शरीरं परित्यज्य गच्छति तदा तदधीनवृत्तिको मुख्यप्राणस्तदनुयाति मुख्यप्राणगमनसमये एव तदधीनवृत्तिका वागादयोपि गच्छन्ति राजामात्यभृत्यवदिति।

(स विज्ञान इत्यादि) तस्मिन् गमनसमये समुत्क्रामन् जीवः स विज्ञानवान् भवति । "यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरम्। तं तमेवेति कौन्तेय सदा तद्भावभावितः" इति स्मृतेः तत्समये यत्र स जीवो याति तादृशस्थानविषयकज्ञानवानेव भवति तद्विषयकस्मृतिमान् भवतीत्यर्थः । यदेतज्ज्ञानमुत्क्रामतो भवति तत्कर्माधीनं न तु स्वप्रयत्नाधीनम । स्मृतौ योगिनामेव तादृशज्ञानस्य स्वप्रयत्नसाध्यत्वप्रतिपादनात्। स विज्ञानमेव तादृशविज्ञानयुक्तमेव जीवं प्राणसमुदायोऽनुअवक्रामति अनुगच्छति राजानं तदनुगामिन इवेति ।

(तं विद्याकर्मणीत्यादि) तं पूर्वोक्तपुरुषं विद्याकर्मपूर्वप्रज्ञा च विद्याकर्मपूर्वजन्मसम्बन्धिवासना च समन्वारभेते । समनुगता भवति । विद्यादिना विशिष्ट एव जीवः परलोकयात्रां निरवर्तयति नहि पूर्ववासनामन्तरेण कश्चिदपि किंचित्कर्तु भोक्तु वा शक्नोति नहि अननुभूतेविषये कारणानां कुशलता सम्भवति । दृश्यते च क्वचित्पूर्वजन्मानुभूत वासना बलात् एतत् जन्मनि अभ्यासं विनैव क्रियाविशेषेषु समीचीनं कौशल्यम् । केषांचित् अति सरलेष्वपि कार्येषु अपांडित्यम् । जातमात्र एवाखुर्दन्तैरतिकठिनमपि पर्वताग्रं कृन्तति नान्यस्तथाकर्तु शक्नोति । यथा

वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राण-मनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति स विज्ञानो भवति स विज्ञान-मेवान्ववक्रामति तं विद्याकर्म्मणी समन्वारभेते पूर्व्वप्रज्ञा च ॥२॥

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्या-त्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याऽविद्यां गमयित्वा-ऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति ॥३॥

तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं

कश्चित् अपक्वमता येन वैराग्ययुक्तो भवति कश्चित्परिपक्वोपि न तत्र मतिं विदधाति तदेतत्सर्वं पूर्ववासनाया उद्भवानुद्भवकारणकमेवेति । तस्मात् वद्याकर्म पूर्ववासनेति त्रितयमपि शकटसम्भारस्थानापन्नम् परलोकयात्रा-पाथेयमादायैव जीवः प्रकृतदेहं परित्यज्य देहान्तरप्राप्तये यात्रां करो-तीति ॥२॥

(तद्यथेत्यादि) यथा येन प्रकारेण तृणजलायुका तृणेऽवस्थिता जलूका प्राणिविशेषलक्षणा तृणेपरिचरन्ती एकस्य तृणस्य अन्तमग्रभागं गत्वा प्राप्य अन्यं यत्र स्थिता तदन्यं तृणान्तरम् आक्रमं स्थानमक्रम्य तृणान्तरलक्षणमाश्रयं प्राप्य आत्मानं स्वशरीरस्य पश्चिमावयवमुपसंहरति पूर्वतृणस्थानादाकर्षति । यथा जलायुका पूर्वतृणमपरित्यजन्ती परं तृणं प्राप्यैव पूर्वं तृणं त्यजन्तीत्यर्थः तथैव तेनैव प्रकारेण अयमात्मा म्रियमाण जीवः इदं वर्तमानं शरीरं भोगायतनम् निहत्याविद्यां गमयित्वा पूर्वशरीरं निश्चेष्टतामापाद्य अन्यं शरीरान्तरलक्षणमाक्रमं स्थानं भोगायतनमाक्रम्य गृहीत्वा आत्मानं पूर्वशरीरात् उपसंहरति । नवीनं भोगायतन[illegible]ष्ठायैव प्राक्तनं शरीरं जीर्णमजीर्णं वा परित्यजतीत्यर्थः ॥३॥

अथायं जीव यदिदं नवतरं शरीरान्तरं करोति तत्पूर्वोपा[illegible] देहो-

**रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याऽविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं**

पादानमादाय तदुपपाद्य सुवर्णकारादिवत् देहान्तरं करोति । अथवा नवीनतरमुपादानद्रव्यमादाय तद्द्वारा शरीरान्तरं करोति तत्राह–

( तद्यथा पेशस्कारीत्यादि ) तद्यथा पेशस्कारी तत्र पेशः सुवर्णं तत्करोति इति पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामेकावयवमुपादाय गृहीत्वा कल्याणतरमभिनववत् विलक्षणं मनोहरं रूपमलंकारादिकं कुरुते सम्पादयति । एवमेव तेनैव प्रकारेणायमात्मा जीव इदं पूर्वावस्थं शरीरं निहत्याविद्यां गमयित्वा निश्चेष्टतामापाद्य तदंशमेवादाय अन्यत्तो भिन्नमिव कल्याणतरं नवीनं रूपं शरीरं कुरुते सम्पादयति । अथवा यथा पेशस्कारी कोशजन्तुः पट्टतन्तो अभिशं गृहीत्वा नवीनं पट्टवस्त्रान्तरं करोति तथैव जीवोपि करोति । नवीनतरमिव जायमानं तत् शरीरं किमाकारकं तत्राह–

(पित्र्यं वेत्यादि) पित्र्यं पितृभ्यो हि तं कर्मबलाद्यत् शरीरमादायायं जीवः पितृलोकसुखमनुभवति । गान्धर्वं वा गन्धर्वलोकोपभोगयोग्यम् दैवं वा देवलोकभोगाययोग्यं प्राजापत्यं वा प्रजापतिभोगयोग्यम् । ब्राह्मं वा चतुर्मुखलोकभोगयोग्यम् । अन्येषां वा भूतानां कर्मबलात् तिर्य्यग्वनस्पतिप्रभृतीनां सम्बन्धि नवतरं शरीरं करोति । अयमाशयः यदयं शरीरान्तरं सम्पादयति न तत्रापूर्वमुपादानमादाय किन्तु पूर्वशरीरोपादानमेव गृहीत्वा सुवर्णकारो यथा पूर्वनिर्मितालंकारसम्बन्धि सुवर्णमात्रादायैव नवीनमलंकारं सृजति तद्वदयं जीवोपि करोति । यदत्र शरीरान्तरं प्रति कर्तृत्वं जीवस्य न तत् साक्षात् किन्तु कर्मद्वारेणैव कर्तृत्वम् । भोगायतनमन्तरेण चिदात्मकस्य कर्तृत्वासम्भवात् पूर्व-

**वा ब्राह्मं वाऽन्येषां वा भूतानाम् ।।४।।**

**स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदम्मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः**

भोगायतनस्य तदानीमतीतत्वात् । किन्तु शुभाशुभपूर्वभवोपार्जितकर्मणैवेति तदुक्तं "कर्मणाऽजनयत् पितेति ।।४।।

(स वा अयमित्यादि) सोयं विज्ञानमय आत्मा जीवः ब्रह्मैव ब्रह्मगुणेनापहतपाप्मत्वादिनायुक्तोपि सन् मनोमयो मनउपकरणकः अयं जीवो मन उपाकारकमादाय सुखदुःखादिकं गृह्णाति । तत उपकरणोपकरणि लक्षण सम्बन्धमादाय मनः प्रचुरः अन्नमयो यज्ञ इतिवत् । एवं प्राणमयः प्राणोपकरणकः चक्षुर्मयश्चक्षूपकरणकः श्रोत्रमयः श्रोत्रोपकरण इत्यादि तेजोमयस्तेजः प्रचुरः अतेजोमयस्तेजोभिन्नमहदहंकारादिमयः यतश्चतुर्विंशतितत्वप्रधानत्वात् शरीरस्येति । काममयः काम इच्छा तन्मयः अकाममयः कामव्यतिरिक्तसंकल्पश्रद्धादिमय इति । क्रोधमयोऽक्रोधमयः प्रीतिमय इत्यर्थः सर्वमयः । तदेतत् सोयं जीव इदं मयोऽदोमय । इहलोक परलोकमय इति ।

(यथाकारीत्यादि) यथा शास्त्रानतिक्रमेण कर्मकर्तुं शीलं यस्य स यथाकारी । यथाचारी । यथाशास्त्रमर्यादयाचरितुं शीलमस्य स यथाचारी । तत्र कर्माग्निहोत्रादिकम् । चरणं सन्ध्यावन्दनादि नित्यं नैमित्तिकम् । अर्थात् यादृशं कर्मचरणं वा करोति स तथा भवति तस्य तस्य कर्मणोनुरूपं फलं प्राप्नोति । एतदेव विस्तरतो दर्शयति–

( साधुकारी इत्यादि ) यो हि व्यक्तिविशेषः साधुकर्म सत्कर्म

**पुण्येन कर्म्मणा भवति पापः पापेन ॥ अथो खल्वाहुः काममय**

करोति । यो हि शास्त्रोक्ताग्निहोत्रसत्यतपस्यादिकं यथासमयं यथादेशं करोति स साधुर्भवति जन्मान्तरे ब्राह्मणदेवादिपुण्यमयं जीवनमासादयति । यस्तु पापकारी पापकर्म ब्रह्मणहत्याकलञ्जभक्षणादिकं शास्त्रप्रतिषिद्धं कार्यं करोति स पापो भवति पापयोनिं श्वशूकरादिकं प्राप्नोति। सत्कर्मकारी ब्राह्मणादिकशुभशरीरयुक्तो भवति पापकर्मकारी च चाण्डालादिशरीरयुक्तो भवतीति भावः । वर्तमानशरीरे विद्यमानो जीवो यत् सत्कर्म करोति असत्कर्म वा करोति तत्रापि पूर्वभवोपार्जितपुण्यपापे एव कारणे भवतः तद्बलादेवेदानीं पुण्यं वा पापं वा आचरति । अयमाशयः पुण्यं द्विप्रकारकं भवति । पुण्यानुबन्धिपुण्यं पापानुबन्धिपुण्यं च । तत्र यथा कश्चित् पुण्यफलं सुखमनुभवन् सत्कर्म एवाचरति एतत्पुण्यं पुण्यान्तरजनकं भवति तत्पुण्यानुबन्धिपुण्यमिति गीयते । यत्र पुण्यफलमनुभवन् मद्यमांसाद्यसत्कर्म करोति तेन भविष्यत्काले पापमेव भविष्यतीति तत्पुण्यं पापानुबन्धि इति गीयते । एवं पापमपि द्विविधं भवति पुण्यानुबन्धिपापं पापानुबन्धिपापं चेति तदिहवार्तमानिकपुण्यपापं प्रति प्राक्कालिकपुण्यपापे हेतू भवत इति ।

(अथो खल्वाहुरित्यादि) प्रकृते अथ शब्दः प्रकृतपक्षव्यतिरिक्ते पक्षान्तरप्रदर्शनार्थकः । खल्वाहुरेके केचन शास्त्रमर्मज्ञा एवं वक्ष्यमाणप्रकारेणाहुः कथयन्ति । किं ते कथयन्ति तत्राह—

(काममय इत्यादि) अयं पुरुषः काममय एव कामप्रयुक्त एव शुभाशुभकर्माणि करोति । यद्यपि शरीरग्रहणे पुण्यपापे पूर्वभवोपाते कारणं भवतीति निश्चयस्तथापि कामना प्रयुक्त एव पुरुषः पुण्यपापयोरर्जने समाहितो भवति । ततश्च काम एव सर्वस्य संसारस्य मूलं कारणम् ।

**एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते ॥५॥**

**तदेष श्लोको भवति ॥ तदेव सक्तः सह कर्म्मणैति लिङ्गं**

तदुक्तं "कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्रेति" श्रुतिराथर्वणी: अकामस्य क्रियाकाचिद्दृश्यते नेह कर्हिचित् । "यद् यद्धि कुरुते किंचित् तत्तत्कामस्य चेष्टितमिति" मनुः । तस्मादयं पुरुषः काममय एव । स काममयः पुरुषो यथा कामो यादृशकामनावान् भवति स तत्क्रतुर्भवति तादृशाध्यवसायवान् भवति । यत्क्रतुर्यादृशाध्यवसायवान् भवति तत्कर्म कुरुते यथाध्यवसायं कर्म शुभमशुभं वा चिनोति । ततश्च यत्कर्म कुरुते तदभिसम्पद्यते । अध्यवासितः पुरुषो यादृशहीनमहीनं वा कर्मानुष्ठानं करोति तादृशकर्मानुरूपं तत्फलं शुभाशुभयोनि प्राप्य यथा योग्यं सुखं दुःखं वा प्राप्नोति तत्तत्कर्मफलमवश्यमेवानुभवति । तत्कर्म यावत्फलं नोत्पादयति तावत्पर्यन्तमवतिष्ठते एवेति । तदुक्तं "कदाचित्स्वकृतं कर्म कूटस्थमिवतिष्ठति । मज्जमानस्य संसारे भावदुःखातिगो भवे" दित्यतः पुरुषः काममयः कामैव संसारस्य मूलं कारणमिति ।

(तदेष इत्यादि) तदेतस्मिन्प्रकृतविषये एषः वक्ष्यमाणः श्लोको भवति ।

(तदेवेत्यादि) लिंगलीनं जन्मसहस्रादपि जीवे विद्यमानं परोक्षमिव कर्मलक्षणार्थं गमयति यापयति फलानुभवकाले तत्सत्तां बोधयतीति लिंगं व्यापकं कारणं तादृशं मनो जीवस्य जीवनयात्रानिर्वाहे प्रधानामात्य इव व्यवस्थितम् । यत्र फले निषक्तं निविष्टं भवति तदेव तत्फलमेव तदारम्भकं कर्मणा शुभाशुभेन सह देहावसानसमयेपि सक्तोनुबिद्धः सन् एति प्राप्नोति एष श्लोको भवतीति पूर्वेणान्वयः । प्रकृतं कर्मोपसंहरन्नाह–

**मनो यत्र निषक्तमस्य ।। प्राप्यान्तं कर्म्मणस्तस्य यत्किञ्चेह करोत्ययं ।। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्म्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्म-**

(प्राप्यान्तमित्यादि) इहास्मिन्कर्मयोग्यलोके यत्किंचित्कर्म सोमयागादिकं तत्तत्फलोद्देशेन करोति फलकामनया तस्य यागादिजन्यस्य शुभाशुभकर्मणोऽन्तं फलभोगेन समाप्तिं कृत्वा कर्मफलं सर्वं भुक्त्वा तस्माल्लोकात् यत्र फलभोगाय गत आसीत् तस्माल्लोकात् कृत्स्नकर्मफलभोगानन्तरम् अस्मै लोकाय पुनः पुनरपि एति आगच्छति, किमर्थमागच्छति तत्राह-

(कर्मणे इति) पुनरपि अपरमपरं कर्म कर्तुमागच्छति । क आगच्छति तत्राह इति नु कामयमानः पुनः कामनाविशिष्टः कर्मसम्पादनाय पुनः पुनः संसरतीति । यथोक्तप्रकारेणाविद्वद्विषयकं संसारं विस्तरत उपवर्ण्य ब्रह्मज्ञानिनोऽविद्वदपेक्षया वैलक्षण्यं दर्शयितुमुपक्रमते

(अथाकामयमान इत्यादि) अथ अनन्तरम् संसारस्वरूपदर्शनेन कामनामूलत्वं ज्ञात्वा ततो जातवैराग्यानन्तरम् अकामयमानः कामनारहितो वीतराग इत्यर्थः यो अकामः कामनाशून्यः कुत एतस्य कामनाराहित्यं तत्राह निष्कामः निर्गताः कामा यस्मात् स निष्कामः । आप्तकामः पूर्वविस्थितकामानां निर्गमनात् आप्तकामत्वं सम्भवति । तत्राप्तः प्राप्तः कामो येन स आप्तकामः आप्तकामत्वमस्य कथं भवति तत्राह आत्मकामः आत्मैव कामो यस्य स आत्मकामः आत्मातिरिक्तकामस्य वस्तुतोऽभावेनात्मलक्षणकामस्य स्वस्वरूपस्य नित्यप्राप्तत्वात् आप्तकामत्वम् भवति । अत एवाकामत्वमपि यत आत्मव्यतिरिक्तकामनाया अभावात् । एतादृशस्य पुरुषश्रेष्ठस्य प्राणा नोत्क्रामन्ति शरीराद्विनिर्गत्य पुनः संसारप्राप्तये न

**कामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ।।६।।**

**तदेष श्लोको भवति ।। यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य**

भवन्ति किन्तु एतादृशं वस्तु ब्रह्मैव सन् ब्रह्माप्येति ब्रह्मणि लीनो भवति यस्य ब्रह्मणि न लयः तस्य प्राणा उत्क्रमित्वा संसारगतये पुनः पुनः प्रभवन्ति यस्तु ब्रह्मणि लीनो भवति तस्य प्राणा उत्क्रमणाय न भवन्ति । तत्र ब्रह्मैव सन् आविर्भूत ब्रह्मस्वरूपसन् जीवो ब्रह्मणि परब्रह्मणि लीनो जायते । यद्यपि इण्धातुः सामान्यतो गत्यर्थकस्तथापि प्रकृते तादृशार्थस्य प्रकरणा संस्पर्शित्वात् लयार्थक एव स्वीक्रियते । तत्र लयो नाम ब्रह्मव्यतिरिक्ततया ब्रह्मपार्थक्येन स्वातन्त्र्येणेति यावत् जीवस्य दर्शनाभावः अपहतपापमत्वादिको यो ब्रह्मगुणः तद्गुणसादृश्येन परमब्रह्मभिन्नत्वेन रूपेण दर्शनयोग्यत्वस्याभावो भवतीति । यद्यपि न तस्य प्राणाउत्क्रामन्तीति कथनं नोपपद्यते । यो हि ब्रह्मोपसन्नस्तस्यैवापहतपाप्मत्वादिब्राह्मस्वरूपाविर्भावो भवति नान्यस्य । परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते इत्यादि श्रुत्यन्तरश्रवणेन देशविशेषविशिष्टब्रह्मप्राप्तिः देशविशेषेऽर्चिरादि मार्गे मन्तरा न सम्भवति । तादृशार्चिरादिगतिश्च सूक्ष्मभूतप्राणादियुक्तस्य प्राणादियोगश्च कर्मप्रयोज्यः । यस्तु कर्मरहितस्य तस्य शरीरेन्द्रियप्राणसम्बन्धाभावेन ब्रह्मैव सन् ब्रह्माप्येतीति नोपयुज्यते । तथापि "समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य" इत्यादि ब्रह्मसूत्रेषु विदुषोपि नाडी विशेषोत्क्रमणाश्रवणदुत्क्रान्तिरवर्जनीयैवेति समाहितत्वात् । विशेषत एतत्तत्वं तत्रैव दृष्टव्यमिति ।।६।।

तदेष श्लोको भवति । तत्तत्र ब्रह्मविद् विषये एषो वक्ष्यमाणः श्लोको भवति तद्यथा–

(यदा सर्वे प्रमुच्यन्ते इत्यादि) यदा यस्मिन्काले अस्योपास[illegible] हृदि

**हृदि श्रिताः ।। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥ तद्यथाहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते**

हृदये श्रिता आश्रिता विद्यमाना इत्यर्थः कामाः सांसारिकविषासक्तविषयका मनोरथाः सर्वेनत्वेकोद्वौ वा किन्तु समस्तास्ते प्रमुच्यन्ते शान्ता उपरता भवन्ति । अथ तदनन्तरं कामोपरमानन्तरमेव मर्त्यो मरणधर्मापि उपासकोऽमृतो भवति पूर्वकालिकोत्तरकालिकपापाभ्यां रहितो असम्बद्धश्च भवति पापसम्बन्धशून्यो भवतीत्यर्थः । अत्र ब्रह्मोपासनसमये एव ब्रह्म समश्नुते ब्रह्मणोऽनुभवं करोति । अहं ब्रह्मावयत्र इत्येवमनुभवमाप्नोतीति ।

(तद्यथाऽहि निर्ल्वयनीत्यादि) यथा येन प्रकारेण अहि निर्ल्वयनी। अहेः सर्पस्य निर्ल्वयनी जीर्णा त्वक् निर्मोक इति यावत् । वल्मीके सर्पनिवासस्थलविशेषे तद्बिले इत्यर्थः प्रत्यस्ता सर्पेण विसृष्टा परित्यक्ता सर्पाऽसम्बद्धा । मृता मृतवदवस्थिता निष्प्राणेत्यर्थः इत्थं भूतापि जीर्णा सर्पत्वक् दूरात् दर्शकानां सर्पाकारेण ज्ञायमाना शयीत स्थिता भवति। एवमेवेत्थमेव । इदं ज्ञातब्रह्मण उपासकस्य शरीरम् इदं ममेत्याभिमानरहिततया परित्त्यक्तमपि । अन्येषां दर्शकानामिदं ब्रह्मविद् स्वशरीरमित्थंरूपेणावभासमान शेतेऽवस्थितं भवति । यथा जीर्णा सर्पत्वक् सर्पासम्बद्धापि यत्र क्वचन स्थिता दर्शकानामयं सर्प इति भयमुत्पादयन्तीवावतिष्ठते तथा ब्रह्मविदः शरीरं ममेदं शरीरमित्याभिमानरहित मपि बद्धानां जीवानामिदं ब्रह्म[illegible]: शरीरमित्यवभासमानमवतिष्ठतेति भावः ।

( अथायमित्यादि ) अथ अप्यय दर्शनसमानाकार ब्रह्मविद्यागमोत्तरकालानन्तरम् अयमुपासकः स्वतोऽमृतः मरणधर्मरहितोपि । अशरीरः मरणात्पूर्वमशरीरकल्प एव । शरीरसम्बन्धि निन्दादिजनितहर्ष[illegible]ादादिराहित्यात् प्राणो ब्रह्मैव गाणादिसम्बन्धित्वेपि तात्त्विक-

**अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ।।७।।**

**तदेते श्लोका भवन्ति ।। अणुः पन्था विततः पुराणो मांस्पृ-**

ब्रह्मानुभवयुक्तत्वात् । प्रादुर्भूतब्रह्मलक्षण इव ःव्यवस्थितः तेज एव । अज्ञानस्वरूपान्धकारस्य विरोधी एव । यथा शार्वर तमोविरोधी सौर्यंतेजस्तद्वदेवेति । यथोक्तप्रकारेण याज्ञवल्क्यात् ब्रह्मविद्यां प्राप्य जनकः प्राह–

(सोहं भगवते इत्यादि) वैदेहः खलु जनको राजा ब्रह्मविद्याप्राप्त्यनन्तरं प्रीतमनाः सन् याज्ञवल्क्यं प्रति प्रोवाच । हे भगवन् भगवते पूजावते तुभ्यं दक्षिणारूपेण गवां सहस्रं ददामि प्रयच्छामीति ।।७।।

तदेते श्लोका भवन्ति तदत्र विषये वक्ष्यमाणा एते श्लोका भवन्ति । के ते श्लोकास्तत्राह–

(अणुः पन्था इत्यादि) अणुर्दुर्विज्ञानः शब्देतरप्रमाणेन प्रत्यक्षादिना ज्ञातुमयोग्यः विततो विस्तृतवेदान्तप्रस्थाने तत्तत्स्थलेषु महता परिकरेण प्रतिपादितः पुराणोऽनादिकालात् आगतः पन्थाः अर्चिरादिमार्गः मां स्पृष्टो मां प्राप्तः शतसंख्यकनाडीद्वारेण स्वदेहस्पर्शीति । यद्वा पूर्वप्रतिपादितोऽर्चिरादिमार्गो मया प्राप्तः तद्विषयकज्ञानवानहमभवमित्यर्थः । तथा यथोक्तोऽर्चिरादिमार्गो मया जनकेनैवानुवित्तोऽनुभूतः यद्यप्ययं मार्गो अन्येनापि ज्ञात एव संसारस्य ज्ञातुश्चानादित्वात तथापि ते शरीरविमोक्षणा नन्तरमेव ज्ञातवान् किन्तु भोगदशायां मयैव वै देहेनैवज्ञातोऽयमर्चिरादिमार्गः योयमर्चिरादिमार्गो ब्रह्मलोकप्रापकः तेनार्चिरादिमार्गेण धीराः परमेश्वरप्रसादात् विलक्षणप्रज्ञावन्तो ब्रह्मविदः इतो विद्यमान विद्याधिकारिशरीरात् विमुक्ता मुच्यमानाः सर्वेभ्यो लोकेभ्यश्च । ऊर्ध्वमुपरीव विद्यमानं स्वर्गं स्वर्गवत् परमप्रियं लोके भगवतः साकेताधिपतेर्लोकम् अत्र

ष्टोऽनुवित्तो मयैव ।। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ।।८।।

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितञ्च ।। एष

स्वर्गशब्दो भगवल्लोकपरक इति बहव आचार्याः कथयन्ति। वयं तु न स्वर्गलोकशब्दोऽन्यार्थकः किन्तु स्वार्थप्रतिपादकः तदर्थश्च "यन्न दुःखेन सम्भिन्नं नचातस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वः पदास्पद" मित्यादिना स्वर्गस्य परमप्रियत्वेन लोके प्रसिद्धत्वात् स्वर्गवत् भगवल्लोकस्य परमप्रियत्वं प्रतिपादितम्। यद्यपि स्वर्गादधिको भगवल्लोकस्तथापि इषुरिव सविता धावतीतिवत् द्रष्टव्यम्। अतएव "स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः" इत्यादि स्थले स्वर्गतुल्ययोरपवर्गयोरित्यर्थः कृतः लोकप्रसिद्ध्यनुसारात्। एतादृशं भगवल्लोकं ते मार्गविदोऽपियन्ति प्राप्नुवन्ति। अनेन मार्गप्रशंसा कृता भवति। एतादृशो हि मार्गो यो ब्रह्मज्ञानिनामपि उपकरोति इति ।।८।।

पुनरपि तमेव मार्गं प्रशंसयन्नाह

( तस्मिन्नित्यादि ) तस्मिन् अर्चिरादिके ब्रह्ममार्गे शुक्लं नीलं पिंगलं हरितं लोहितं च विद्यते इति प्राचीना आहुः कथयन्ति तथा च श्रुत्यन्तरम् "असौ वा आदित्यः पिंगल एष शुक्ल एष नील एष पीत एष लोहितः" इति। एष पन्था अर्चिरादिमार्गः ब्रह्मणाह अनुवित्तः ब्रह्मसंबद्धः ब्रह्ममार्ग इत्यर्थः इयमेव मार्गमधिरुह्य गच्छति ब्रह्मलोकमतोयं ब्रह्मसंबद्धो ब्रह्ममार्ग इति। तेन ब्रह्ममार्गेणार्चिरादिना। पुण्यकृत पुण्यं शास्त्रविहितं कर्म पूर्वं सम्पाद्य तेन पुण्यकर्मणा पापविनाशानन्तरं शुद्धान्तःकरणः ब्रह्मवित् ब्रह्मज्ञानवान्। तैजसश्च तेजःसम्बन्धी तेजस उपासक इत्यर्थः पंचाग्निविद्यानिरत इति। " तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धातप इत्युपास्ते " इति

पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥६॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥ ततो भूय इव ते

छान्दोग्ये अर्चिरादिमार्गशीलकानां ब्रह्मज्ञानिनां चार्चिरादिमार्गेण गमन-श्रवणादिति ॥६॥

नवममन्त्रे ब्रह्मवित् पुण्यकृदिति कथितं तत्र कर्माङ्गज्ञानस्य ब्रह्म-प्राप्तौ कारणतां स्पष्टयन्नाह

( अन्धन्तम इत्यादि ) ये अनुष्ठातारः अविद्यां केवलं कर्म उपासते अनुतिष्ठन्ति स्वर्गादिफलमुद्दिश्यैव कर्मणामग्निहोत्रादीनामनुष्ठानं कुर्वन्ति न तु ब्रह्मज्ञानार्थितया कर्मानुष्ठानं कुर्वन्ति । ते इत्थंभूताः कर्मोपासकाः अन्धमतिनिविडं तत्त्वज्ञानमन्तरेणाशक्यानुच्छेद्यम तमः संसारलक्षणम-न्धकारवत् विवेकाजनकमन्धकारम् प्रविशन्ति प्रतिपद्यन्ते । तत्तत्फलोद्देशेन कर्म कृत्वा परलोकमवाप्य तत्फलमुपभुज्य तदवसाने पुनरिमं लोकमागत्य तत्तत्फलाय पुनरपि कर्म कुर्वाणा घटीयन्त्रन्यायेन संसारमहोदधौ निमग्ना भवन्तो न कदाचिदपि संसारविमुक्ता भवन्ति अतोऽधतमस्येव तेषां प्रवेश इति भावः । उपासका य उ ये तु विद्यायां केवलविद्यायामेव रताः नित्य नैमित्तिकं कर्म परित्यज्य विद्यायामेवकर्मंत्यजन्ति । ते उपासकाः परि-त्यक्तकर्माणः "मोहात्तस्य परित्यागस्तामसः परिकीर्तितः" इति भगवदुक्तेः तामसत्यागत्यागवत्वात् । ततो भूय इव पूर्वापेक्षयाऽधिकतरमितमोन्धकारं प्रतिपद्यंते फललेशमप्यनुवाप्य पतिता भवन्ति । वैराग्याभावाद् । ज्ञानोपाये आलस्यादप्रवर्तमाना नित्यनैमित्तिककर्माणि परित्यजन्तोऽहर्निशमुपचीयमाना धर्माणोत्यधोगतिं गच्छन्ति तस्मात्केवल कर्माराधकापेक्षया केवल-विद्योपासका अतिशयेनाधमा इति । केचनामुमेव मंत्रं दृष्ट्वा ज्ञानकर्मणो समुच्चय इति मन्यन्ते तेतु अतीवभ्रान्ताः यतो मोक्षं प्रति ज्ञानव्यतिरिक्त-

**तमो य उ विद्यायां रताः ।।१०।।**

**अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।। तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधो जनाः ।।११।।**

**आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।। किमिच्छन् कस्य**

स्योपायत्वनिराकरणपरक वचनैर्विरोधात् । यदि ज्ञानकर्मणोः समुच्चयः श्रुत्यभिमतो भवेत् तदा 'नान्यः पन्था विद्यतेऽयनाये' त्यादिना ज्ञानेतरकारणता निराकरण सर्वथैवासमंजसमापद्येत । एवं ज्ञानस्य मोक्षोपायत्वप्रतिपादक वचनैरनेकैर्विरोधः प्रसज्येत । एवं कर्मणां ज्ञानांगत्वप्रतिपादकवचनैरपि विरोधः स्यादतो न ज्ञानकर्मणोः समुच्चय इति ।।१०।।

ननु भवतु अविद्योपासकानामन्धतमसि प्रक्षेपस्तावता किं स्यादित्या शंकायामाह–

(अनन्दा नाम ते इत्यादि) अनन्दा आनन्दलेशरहिता । न विद्यते आनन्दः सुखं यत्र तादृशः सुखसामान्याभाववन्तएतन्नामकाः केचन लोका लोकविशेषाः सन्ति । ये खलु अन्धेन निविडेन तमसान्धकारेणावृता आच्छादिताः सुखन्तु नास्त्येव प्रत्युत दुःखेनोतप्रोता तान् लोकान् ते इतः प्रेत्य मृत्वा शरीरत्यागान्तरमभिगच्छन्ति प्राप्नुवन्ति । के गच्छन्ति तान् लोकान् तत्राह ये अविद्वांसो ब्रह्मज्ञानरहिताः । तथा येऽबुधः प्रत्यगात्मविद्याविकलाः पंचाग्निविद्याविरहिताः अत्र बुध इति प्रथमा बहुनस्य रूपं ननु अकारान्तबुधशब्दस्य प्रथमैकवचनम् । बुध्यते इति बुत् । बुध धातोः क्विप् प्रत्यये सति बुधिति ततः प्रथमा बहुवचनम् । एकमानन्दरहितं दुःखातिशययुतं भोगस्थानं विद्यते यत् स्थानं ब्रह्मज्ञानविहीनः केवलकर्मोपासकः पुरुषः प्राप्नोति प्राप्य चातीवदुःखीभवतीत्येतदेव महत्क्षतिकरमिति ।।११।।

( आत्मानं चेदित्यादि ) यः खलु विद्यमानेभ्योप्यैहिकामुष्मिक-

कामाय शरीरमनुसञ्ज्वरेत् ।।१२।।

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्सन्देह्ये गहने प्रविष्टः ।।
स विश्वकृत्स हि सर्वस्य कर्त्ता तस्य लोकः स तु लोक एव ।।१३।।

सकलोत्तमाधम पदार्थजातेभ्यो वितृष्णो भगवतः साकेताधिपतेरहेतुकभक्ति-मात्रे संलग्न उपासकविशेषः पुरुष । आत्मानं स्वकीयशरीरेन्द्रियाध्यक्षं स्वात्मानमेतादृशोऽहमस्मि शरीरेन्द्रियमनःप्राणबुद्धिभ्यो जडेभ्योऽतिश-येन विलक्षणः किंबहुना ब्रह्मैवाहमस्मीति विजानीयात विशेषतो ज्ञान-वान्भवेत् । तदा किमिच्छन् शरीरेन्द्रियादिसमस्तभोगयोग्येषु लौकिक-पारलौकिकविषजातेषु स्पृहाया अभावेन स्वबन्धुभूतकलत्रपुत्रमित्रादेरपि अभिमानराहित्येनाभावात् स्वस्य किमिच्छन् कीदृशं फलविशेषमिच्छन् कस्य वा कामाय कस्य सम्बन्धिनोऽभीष्टाय शरीरमनुसंज्वरेत् शरीर तप्यमानं सत् तदनु स्वयमपि कथं तापयुक्तो भवेत् । शरीराद्यनुबन्धिफलमुद्दिश्य कथमनुतापयुक्तो भवेत् । यदा शरीराद्यतिसमीपवर्ति वस्तुष्वपि संजातवैराग्यस्तदा किमर्थं स शरीरादिसम्बन्धितापेनानुतप्तो भवेदिति भावः ।।१२।।

पुनरपि प्रकृतमेवस्तौति

(यस्यानुवित्त इत्यादि) यस्योपासकस्यात्मा स्वात्मा गहने एति निविडे सन्देह्येऽनेकानर्थसंकुलेऽमेध्यसंकुलेस्मिन् देहात्मके वने पूर्वोपार्जित-कर्मबलेन प्रविष्टो देहस्थामितामासाद्यानेकविध दुःखेन दुःखितः सन्नपि मन-नाभ्यासबलेन स्वात्मभूतः परमात्मा अनुवित्तोऽवगतः प्रतिबुद्धो ध्यातश्च । स विष्वकृत् स एव लोककृत् ईश्वरवत् । तत्र कारणमाह—

(स हीत्यादि) स हि सर्वस्य कर्ता सर्वस्योत्पादकः स उ लोकः तत्र लोकः आश्रयभूतः सर्वस्य जनयिता य ईश्वरस्तस्येश्वरस्यापि स ब्रह्मज्ञानी लोक एवाश्रयभूत एव भवति । "उदाराः सर्व एवैते ज्ञानित्वात्मैव मेमत"

**इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदीर्महती विनष्टिः ॥ य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति ॥१४॥**

**यदैतमनुपश्यत्यात्मानं देवमञ्जसा ॥ ईशानं भूतभव्यस्य न**

मित्यादिना भगवता श्रीकृष्णेन स्वयमेव प्रतिपादनात् । भक्तवशं वदस्य भगवतः साकेताधिपतेर्ज्ञानिनं विना स्वरूपसत्ताया एवाभावात् भगवत्कृपया ब्रह्मज्ञानी सर्वत उत्कृष्टसत्तां लभते इति भावः ॥१३॥

( इहैवेत्यादि ) इह एतस्मिन् विद्यमानशरीरे एव वर्तमानस्त्वयम् तद्ब्रह्म यस्य ब्रह्मणो ज्ञानात् संसारसागरादुपासका मुक्ता भवन्ति तद्ब्रह्म-विद्यो जानीमो ज्ञानवानित्यर्थः अथेति सम्यक् न चेदवेदिः यदी ह शरीरे ब्रह्मज्ञानं जातं तन्महती विनष्टिर्महाहानिः तत्र वेदनं वेदिर्ज्ञानम् नञो भावार्थः ज्ञानाभावोऽज्ञानम् तदेव महाहानिरिति । ज्ञानलाभस्य महाफलत्वम-ज्ञानप्राप्तेश्च महाहानित्वं दर्शयितुमाह–

(येतद्विदुरित्यादि) ये उपासकाः संसारविषयेभ्यो विरक्ताः सन्तः तद्ब्रह्मपरमोपास्यमनन्यया भक्त्या विदुर्ज्ञानवन्तस्ते अमृताः मोक्षभाजो भवन्ति आनन्दमयब्रह्मरूपत्वात् । अथेतरे । अथ ये इतरे ब्रह्मज्ञानविरहितास्ते दुःखं दुःखमयं संसारमेवापियन्ति प्राप्नुवन्ति । ब्रह्मव्यतिरिक्त केवल कर्माद्यु-पासकस्य संसार चक्रात् कदाचिदपि निवृत्तिर्न भवति किन्तु घटीयंत्रवत् तस्य संसारः सदैवानुवर्तमानस्तं सर्वदैव दुःखयतीति ॥१४॥

ब्रह्मज्ञानस्य महाफलप्रयोजकत्वं दर्शयति–

(यदैतमनुपश्यतीत्यादि) स उपासको यदा यस्मिन् काले एनम् भूतभव्यस्य जातस्य जायमानस्य वर्तमानस्य चेशानमीशितारं देवं द्योतमानं प्रकाशलक्षणं आत्मानं परमात्मानम् । अञ्जसाद्राक् पश्यति साक्षात्करोति

ततो विजुगुप्सते ॥१५॥

यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्त्तते । तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥१६॥

यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः ॥ तमेव मन्य

तदा न विजुगुप्सते सर्वस्याप्येकात्मकज्ञानात् वस्तुमात्रे निन्दा न प्रवर्तते । एकात्मज्ञानवतः परमेश्वरात् पृथक्भूत वस्तुभावात् कुत्रापितोऽघृणा न जायते इत्यर्थः ।

( यस्मादित्यादि ) यस्मात् सर्वेशानात् अर्वाग् नीचैरेव तदन्यविषये एव । संवत्सरः कालात्मा संवत्सरः अहोभिः स्वावयवभूतैर्मासपक्षाहोर्भिर्दिनैः परिवर्तते परिच्छेदकत्वेन वर्तते । यतः कालपरिच्छेद आत्मव्यतिरिक्तवस्तुष्वेव भवति तत आत्मा संवत्सरमासादिकालपरिच्छेद रहित इति ॥१५॥

( तद्देवा इत्यादि ) तं परमात्मानं देवा द्योतमानाः ज्योतिषां ज्योतिर्मत्वेन प्रसिद्धानामपि ज्योतिः प्रकाशकम् । सर्वावभासकत्वं ब्रह्मण एवेति । तथा अमृतं कालापरिच्छिन्नम् आयुः सर्वप्राणिनां प्राणनक्रियाकारणीभूतम् तं परमात्मानम् उपासते उपासनां कुर्वन्ति । देवादिभिर्महानुभावैरपि उपासकस्य ब्रह्मण इत्यर्थः ॥१६॥

(यस्मिन् क्वेत्यादि) यस्मिन् अधिकरणे पंचजनाः पंचजनसंज्ञकाः पंच । च तथा आकाशश्च प्रतिष्ठितः स्थितः अत्राकाशपदं भूतान्तराणां पृथिव्यादीनामप्युपलक्षकम् । यथा इतः पूर्वमन्त्रे ज्योतिषामिति षष्ठयन्तपदोपात्तज्योतिशब्दो निर्णायकान्तरापेक्षस्तथैवेहापि मन्त्रे पंचजनशब्दोपि निर्णायकान्तरापेक्ष एवेति पंचत्वसंख्यान्वययोग्यत्वात् चक्षुरादिन्द्रियाण्येव ज्योतिःपदवाच्यानि भवन्ति तमेवं तादृशं पंचजनाधिष्ठान-

आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ।।१७।।

प्राणस्य प्राणमुत चक्षुसश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः ।। ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ।।१८।।

मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन ।। मृत्योः स मृत्यु-

भूतमात्मानम् एतादृगात्मैव ब्रह्मामृतममृतरूप इति विद्वान् जानन् अन्योपि पुरुषोऽमृतो भवति कालादिपरिच्छेदशून्यो भवति कालादिपरिच्छेदादि-रहित ब्रह्म जानन् पुरुषोपि ब्रह्मवदेव कालादिपरिच्छेद शून्यो भवतीति भावः ।।१७।।

इतः पूर्वमन्त्रे प्रतिपादितम् यत् पंचजनशब्देन ज्योतिषां ग्रहणं भवति तत्र कानि तानि ज्योतींषि तत्राह–

(प्राणस्य प्राणमित्यादि) प्राणस्य प्राणम् अत्र प्राणशब्देन स्पर्श-नेन्द्रियस्य ग्रहणं भवति वायुना प्रणीनात् चक्षुषश्चक्षुरित्यनेन चक्षुरिन्द्रियं रूपप्रकाशकं परिग्रहीतं भवति श्रोत्रस्य श्रोत्रमित्यनेन शब्दग्राहकस्ये-न्द्रियस्य ग्रहणम् मनसो मन इत्यनेन मनस इन्द्रियस्य ग्रहणं घ्राणरसनयो-रपि माध्यन्दिनशाखापाठबलात् ग्रहणं भवति । यः प्राणादीन्द्रियाणा-मनुग्राहक एतादृशं परमात्मानं ये उपासका विदुर्जानाति । ते पुरुषाः पुराणं कारणरहितम् अग्र्यम् सर्वत्र विद्यमान मित्यर्थः । ब्रह्मपरमेश्वरम् निचिक्युनिश्चितवन्तः । परब्रह्मविषयक व्यापक मित्यर्थः । ब्रह्म परमेश्वरम् निश्चिक्युर्निश्चितवन्तः । परब्रह्मविषयक निश्चयवन्तोऽभवन्निति ।।१८।।

एतादृशं ब्रह्मज्ञानं केनकारणेन भवतीति जिज्ञासायां तत्साधनं दर्शयितुमाह–

(मनसैवेत्यादि) तद्ब्रह्म मनसा अन्तःकरणेनैव अनुपश्चात् श्रवणम-ननोत्तरकालं दृष्टव्यं ज्ञातव्यम् । श्रवणमनननान्तरं दर्शनसमानाकारकस्मृति

**माप्नोति य इह नानेव पश्यति ॥१९॥**

**एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ॥ विरजः पर आकाशादज**

भागलक्षण ध्यानं दोषा कलुषितेन मनसा सम्पादनीयम् । "एषोणुरात्मा चेतसा वेदितव्यः" इति श्रुत्यन्तरात् ब्रह्मसाक्षात्कारस्य मनःकरणकत्वप्रसिद्धे-रितिभावः । ननु न ह्येकः परमात्मा अनेकेषां पंचजनभूताकाशादीनामाधारः संभवतीति यो मन्यते । तं प्रत्याह—

(नेह नानेत्यादि) इहास्मिन् द्रष्टव्ये परब्रह्मणि किंचन नानात्वं नास्ति । नानाशब्दो भावप्रधानकत्वात् नानात्मपरकः, यस्मिन्पंच पंच जना इति मं[?]तिपादिते परब्रह्मणि नानात्वं भेदो नास्ति । लेशतोपि तत्रभेद-स्यावकाशो न भवतीति ।

(मृत्योरित्यादि) यः खलु इह समस्तप्रपंचस्याधारभूते परब्रह्मणि नानेव नाना इव । अल्पार्थक इव शब्दस्ततश्चाल्पमपि नानात्वं पश्यति विजानाति स मृत्योः सकाशात् मृत्युमाप्नोति । अर्थात् जन्ममरणप्रबन्धो-च्छेदस्तस्य कदाचिदपि न भवति । अपि तु संसारात् संसारमेव प्राप्नोति अत्यंतमेव संसारभाग् भवतीति भावः । ये केचनामुमेव मंत्रंप्रपंचमिथ्यात्वे-प्रमापयन्ति तेषां दुराशामात्रम् "नाभाव उपलब्धेरित्यादि" ब्रह्मसूत्रेषु आचार्येण स्वयमेव निराकरणात् । विशेषत एतत्तत्त्वम् । ब्रह्मसूत्रे एवाव-लोकनीयं तद्विचारस्यात्राप्रकृतत्वादिति ।

( एकधैवेत्यादि ) अप्रमेयं प्रमातुमयोग्यम् कालादिसर्वपरिच्छेद-रहितम् ध्रुवं निश्चलम् मेधीवत् दृढम् । एतत्सर्वेषां जडचेतनानामात्मभूतम् ब्रह्म । एकधैवैकरूपेणैव सर्वभेदरहिततयैव । अनुद्रष्टव्यं श्रवणोत्तरकालं ज्ञातव्यम् । सर्वभेदप्रत्ययस्तमितब्रह्ममात्रं ज्ञातव्यमित्यर्थः । स चात्मा परमेश्वरो विरजः रजोगुणविकारभूतैरागाद्दिदोषैरस्पृष्टः आकाशादपि परः

आत्मा महान्ध्रुवः ॥२०॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ नानुध्यायाद् बहूञ्छब्दान्वाचो विग्लापनं हि तदिति ॥२१॥

स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य

अतिशयेनोत्कृष्टः यथा आकाशस्यापि कारणम् । अज उत्पत्त्यात्मकविकार रहितः महानतिव्यापको ध्रुवोऽविनाशी । एवं भूतोयमात्मा परमेश्वरः स एव ज्ञातव्य इत्यग्रिमेण संबन्धः ॥२०॥

(तमेवेत्यादि) तमेतादृशं पूर्ववर्णितमेव धीरो मेधावी विज्ञाय तादृशं परमात्मानं ज्ञात्वा श्रवणमननाभ्याम् । ब्राह्मणोधीतवेदः द्विजातिर्वा तेन नास्ति कथंचिदध्यात्मचिन्तने जन्मजातशूद्राणामधिकार इति । प्रज्ञां प्रकर्षेण ज्ञानं निदिध्यासनं कुर्वीत कुर्यात् । एतादृशमेवात्मानं ध्यायीतेति। बहूनने कप्रकारकानन्यान् आत्मप्रतिपादकातिरिक्तान् नानुध्यायात् न कथमपि चिन्तयेत् यतस्तत्वाचो वाण्या विग्लापनं विग्लानिसाधनं श्रमोत्पादकमेव । तदित्यत्रेति शब्दो मंत्रसमाप्तिद्योतक इति ॥२१॥

(स वा एष महानज इत्यादि) यः खलु पूर्वं निर्दिष्टः परमात्मा महानज इत्यादिना तथा योयं निर्दिष्ट आत्मा कतम आत्मा इत्यादिना । स पूर्वोपात्तः परमेश्वरः स योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरित्यादिना निर्दिष्ट जीवात्मनि शेते तिष्ठति जीवे अन्तर्यामितया वर्तते । परमेश्वरोऽन्तर्यामितया जीवे वर्तते इत्यर्थः । अत एवाग्रे वक्ष्यति आत्मान्येव जीवे एव। आत्मान परमेश्वरं पश्यतीति । अन्तर्हृदये ज्योतिरित्यस्यार्थ आकाश इति । ज्योतिराकाशयोः स्वच्छत्वात्साधर्म्यम् । एवं चाकाशशब्दो जीवपरक

**एषोन्तर्हृदय आकाशस्तस्मिञ्छेते सर्व्वस्य वशी सर्व्वस्येशानः**

एव । एवं च विज्ञानमयाकाशशब्दित जीवे पूर्वोक्तमहानजो ध्रुवः परमात्मा अन्तर्यामिरूपेण वर्तते इति । यद्वा योयं विज्ञानमय इत्यत्र कतम आत्मा योयं विज्ञानमय इत्यादिना कथितस्य जीवस्य ग्रहणं न सम्भवति । महानज इत्यादिना प्रतिपादितमहत्त्वस्यासंभवात् । किंतु विज्ञानमय इत्यनेन साक्षादेव परमात्मनःकथनमिति केचन मन्यन्ते इति ।

(सर्वस्य वशीत्यादि) यः पूर्वं जीवे शयानोऽन्तर्यामितया परमेश्वरः प्रदर्शितः स सर्वशक्तिमान् स सर्वस्य वशी । तस्य वशे नियन्त्रणेऽधिकारे सर्वोपि वर्तते । ये इमे ब्रह्मरुद्रेन्द्रपुरोगमा देवास्तेपि अस्यैव वशे वर्तन्ते । तदुक्तमन्यत्र "एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते-तिष्ठतः" इत्यादिना परमेश्वराज्ञायां सर्वे वर्तन्ते । तथा श्रुत्यन्तरेपि कथितम् "भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति । अतः प्रशासनेन धारकत्वलक्षणमात्मत्वं कथितं भवति परमेश्वरे । स च परमेश्वरः सर्वस्येशानः सर्वस्यापि प्राणभृतोऽयमेव नियन्ता नियमनकर्त्ता । अत एव शैत्यं वह्नौ न संक्रामति औष्ण्यं वा जले । सर्वस्येशान इति विशेषणेन नियन्तृलक्षणमात्मत्वं प्रतिपादितं भवति । स परमेश्वरः सर्वस्याधिपतिः । एतावता शेषित्वलक्षणमात्मत्व-मुक्तं भवति । य इमे वशित्वादयो गुणा अत्र परमेश्वरे कथितास्ते वशित्वा-दयो गुणाः छान्दोग्यश्रुतसत्यकामत्वापहतपाप्मत्वादिगुणानामपि संग्राह-का भवन्तस्तेषामपि सद्भावं गमयन्तीति ।

(स न साधुनेत्यादि) स सर्वस्येशिता परमात्मा साधुना कर्मणा भूयानधिको न भवति न वा असाधुना शास्त्रप्रतिषिद्धकर्मणा कनीयान् न्यूनो न भवति । अयमभिप्रायः यथा जीवो नियम्यः शास्त्रविहितकर्मानुष्ठानेन

**सर्वस्याधिपतिः स न साधुना कर्म्मणा भूयान्नो एवासाधुना**

तज्जनितसुकृतापूर्व सहकृतो विलक्षणं सुखं स्वर्गीयमनुभवन् उत्कृष्टो भवति। यथा वा शास्त्रप्रतिषिद्धकर्माचरणेन सञ्जातदुरितापूर्वसहकृतो नरकयातनामनुभवन् हीनतमो भवति। तथा परमेश्वरः साध्वसाधुकर्मणा नोत्कृष्टो भवति न वा हीनतामेवानुभवति अपि तु निस्तरंगमहोदधिकल्पः सर्वदा एकरूप आस्ते। साध्वसाधुकर्मप्रयोज्योत्कर्षापकर्षशून्य एव सर्वदावतिष्ठते इति भावः।

(एष सर्वेश्वर इत्यादि) एषो यः साध्वसाधुकर्मप्रयोज्य कल्लोलरहितः स एव सर्वस्य प्राणिवर्गस्य जडवर्गस्य चेश्वरो नियन्ता नियामकः एष एव परमेश्वरः सर्वभूतानां चराचराणामधिपतिः शेषी अवयवी। एष एव भूतपालो भूतानां सर्वेषां पालको रक्षकः तथा एष एव परमेश्वर एषां लोकानामसंभेदायासांकर्यायविधरणो विधारकः सेतुरपि परमेश्वर एव। यदि परमेश्वरेण लोका नियत्रिता न भवेयुस्तदा सर्वेपि स्वस्वमर्यादारहिता भवेयुः। परमेश्वरनियन्त्रितास्तु यथाकालं यथादेशं यथाकार्यं सर्वे सर्वत्र स्वस्वमर्यादयासमवेता भवन्तो दृश्यन्ते। न हि कदाचित् शालिबीजादुत्पद्यते गोधूमचणकादिकम्। तत्कस्य हेतोः ? परमेश्वरनियन्त्रणात्। अन्यथा सर्वे सर्वत्र संचरन्तो जगन्मर्यादामुपप्लावयेयुरिति। इदं च परमात्मप्रकरणम्। तत्र "आत्मैवेदमग्र आसीत्पुरुष विध" इत्यादौ देवताविशेषस्य भगवतः साकेताधिपतेरेव प्रस्तुतत्वात् तस्यैव साकेताधिपतेरेव सर्वेश्वरत्वादिगुणाः सन्ति नान्यस्येति नात्रदेवान्तराणामवकाशलेशोप्यस्तीति वोद्धव्यमिति। ननु कथमयं परमेश्वरो ब्रह्मेति। यतोऽस्मिन् बृहन्तो गुणाः सन्ति ततोयं ब्रह्मेति। तथाहं

**कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति**

"नहि तस्य गुणाः सर्वे वक्तुं मुनिगणैरपि ।
वक्तुं शक्या वियुक्तस्य सत्वाद्यैरखिलैर्गुणैः ।।
नान्त गुणानां गच्छन्ति तेनानन्तोयमीरितः" इति ।
तवानन्तगुणस्यापि षडेव प्रथमे गुणा ।।
वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वदेवैः ।
महात्मनश्चापशराशिपाणे रामस्य जिष्णोर्वसुधाधिपस्य ।।
चतुर्मुखायुर्यदिकोठिवक्त्रो भवेन्नरः क्वापि विशुद्ध चेताः ।
न ते गुणा नामयुतैकसमंशं वदेत्त वा देववर प्रसीद ।।
यथा रत्नादि जलधेरसंखेयानि पुत्रक ।
तथा गुण ह्यनन्तस्य ह्यसंखेया महात्मनः ।।
इषुक्षयान्निवर्तन्ते नान्तरिक्षा क्षितिक्षयात् ।
मतिक्षयान्निवर्तन्ते न श्रीरामगुणक्षयात् ।।
समस्तकल्याणगुणात्मकोसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोसौ ।।
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
पर- पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।

इत्यादिप्रमाणैः प्रमान्तरेण च भगवद्गुणानामन्तत्वादवगमात् भवति परमेश्वरो ब्रह्मपदवाच्य इति ।

( तमेतमित्यादि ) तमेतं पूर्वोक्तवशित्वादिसकलकल्याणगुणभाजनं परमात्मानम् । ब्राह्मणा अधीतस्वाध्याया ब्राह्मणत्वजात्याक्रान्ताः वेदानुवचनेन वेदानामनुवचनमध्ययनम् तेन वेदाध्यायनेन । यज्ञेनाग्निहोत्रादि- नित्यनैमित्तिककर्मानुष्ठानेन "नित्यनैमित्तिरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन् अभ्यासेन तु याचयेदि" त्यादिना कर्मानुष्ठानस्यावश्य-

**यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति एतमेव**

कर्तव्यत्वप्रतिज्ञानात् । दानेन यथाशक्तिदानकरणेनापि शुद्धिसम्भवात् । अनाशकेन तपसा । न तु सर्वथानशनम् शरीरपातात् । न वा चान्द्रायणादिशीलस्य धातुवैषम्यापत्तेः । एभिर्विविदिषंति ब्रह्म वेदितुमिच्छन्ति। तत्र आशोऽशनं भावे घञ्प्रत्ययः अनाशोऽनशनम् स्वार्थे क प्रत्ययः एतदनशनं कामानशनलक्षणमेव नतु सर्वात्मना भोजनाभावः । तथासति अन्नमयशरीरस्य कारणाभावेऽभावप्रसंगात् । अथवा न विद्यते आशो यस्य तदनाशं स्वार्थे कः तथा च फलाभिसन्धिरहितेन तपसा विविद्विषेदिति । अत्र यज्ञादीनां विनियोगो वेदने न तु विविदिषायामर्थात् यज्ञादीनां न विविदिषं प्रति किन्तु ज्ञाने साधनत्वम । यथा अश्वेन जिगमिषति । पद्भ्यां जिगमिषति इत्यादौ अश्वादिसाधनस्य धात्वर्थगमने एवान्वयो भवति न तु गमनेच्छायामेव, प्रकृतेपि धात्वर्थवेदने एव करणत्वं यज्ञादीनां न तु ज्ञानेच्छायाम । न च प्रकृतिप्रत्यार्थयोर्मध्ये प्रत्ययार्थस्यैव प्राधान्यमिति वैयाकरणानामुद्घोष उत्सर्गलक्षणस्ततश्च प्राधान्यमिह सनर्थ इच्छाया एवेति प्रधानेनेच्छयैव जनकत्वसंबन्धेन पदार्थान्तरस्य यागादेरन्वयः स्यात् न त्वप्रधानेन वेदनेनेति वाच्यम् भावानवबोधात् । यद्यप्यन्यत्र सर्वत्र प्रत्ययार्थस्यैव प्रधान्यं भवतीत्युत्सर्गस्तथापि अश्वेन जिगमिषतीति सन्प्रत्ययान्तस्थले प्रकृत्यर्थप्राधान्यस्यैव दर्शनात्, तद्वत्प्रकृतेपि प्रकृत्यर्थभूतवेदनसाधनत्वमेव वेदानुवचनादीनां तृतीया विभक्त्या प्रतिपाद्यते इति । एतत्तत्वं विशेषतो ब्रह्मसूत्रीयतृतीयाध्यायेंगपादे विचारितमिति तत एव द्रष्टव्यमिति ।

(एतमेवेत्यादि) एतमात्मानं यथोक्तितः पूर्वं वेदानुवचनादिना विविदिषन्तीति कथितं तमेतं परमात्मानमेव विदित्वा श्रवणोत्तरकालमुपपत्तिद्वारा विनिश्चित्य निश्चयकर्ता मुनिर्भवति । मननशीलो मुनिः

**प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्ध स्म वै तत्पूर्वे विद्वांसः**

मनेरुच्चेति सूत्रेण मनधातो रिन् प्रत्यये मकारानष्ठाकारस्योकारादेशे-मुनिरित सिद्धयति तदर्थश्च मननशीलः मननं च उपपत्तिद्वारा श्रुतार्थस्य निश्चयकरणं स यः पूर्वोक्तमात्मानमुपपत्त्यादिद्वारेण जानाति स मुनिर्योगी-भवतीति । किं बहुना एतमेव पूर्वप्रकारोपदर्शितमेवात्मानं लोकं लोक्यते दर्शनविषयीक्रियते इति लोकस्तम् । इच्छन्तोऽभिलषन्तः प्रव्राजिनः प्रव्रजनशीला महात्मानः परिव्रजन्ति संन्यासिनो भवन्ति । ननु कथमित्थ-मुच्यते । ये प्रव्रज्यायुक्ता ते प्रव्राजिन इति कथ्यन्ते ततो यदि पूर्वमेव प्रव्रज्यावान् स कथं पुनः परिव्रजिष्यति । नहि दण्डविशिष्टे दण्डस्य विधान-मिति दण्डी दण्डवान् न भवति । तथा चौदनं पचतिवदिद वाक्यं तथापि प्रव्रज्या शब्दस्य न संन्यासोर्थः किन्तु वैराग्यमर्थः । तथा च ये विरक्ताः सांसारिकविषयेभ्यः ते सर्वोत्कृष्टमात्मनोऽभिलाषयैव सन्यासं कुर्वन्तीति । एतमेवेत्यत्रावधारणार्थक एवकारस्य श्रवणात् । आत्मलोकेतर-लोकेच्छावतामपक्ववैराग्याणां नास्त्यत्र प्रव्रज्यायामधिकार इति ज्ञायते । एतदुक्तं भवति पक्ववैराग्यवतामेव नित्यभगवल्लोकप्राप्तिमुद्दिश्य प्रव्रज्या-ग्रहणम् । अन्यथापक्ववैराग्यवता सन्यासग्रहणे वैराग्यस्यापक्वत्वात् सन्यासोचितविधौ प्रवृत्तो न स्यात् । कर्म च नित्यनैमित्तिकमनाचरन् प्रतिक्षणमुपचीयमानपाप्मा अधोगतिं यास्यति । अतो यः सांसारिक-विषयेभ्यः सर्वथा विरक्तः भगवन्मात्रशरणस्तस्यैव भवगल्लोकप्राप्तिमु-द्दिश्य संन्यासेधिकार इति निश्चीयते । दृश्यते भविष्यति च घुष्टे कलौ अनधिकारिणां संन्यासवतां मठादावुन्नतपदे विविशमानानां महद्वि-डम्बनमिति ।

(एतद्धस्मेत्यादि) एतत् एतादृशाः पूर्वे पूर्वकालिका विद्वांसो

प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः। स एष नेति

ब्रह्मविदः प्रजां पुत्रादिलक्षणां न कामयन्ते तद्विषयककामनां न कृतवन्तः प्रजया पुत्रादिलक्षणया किं करिष्याम इति विचारयन्तः। अत्र किंशब्द आक्षेपार्थकः के इत्थं कृतवन्तः येषां नोऽस्माकमयं पुत्रादिलक्षणो लोक आत्मा परमात्मैव। प्रजालक्षणादिलोकेन योऽर्थः साधितो भवति यत्फलमाप्यते स लोकोऽस्माक परमात्मैव विद्यते। एवं ये भगवतैकशरणा ब्रह्मविदस्तेषामियमुक्तिस्ते प्रजां न कामयन्ते। एतल्लोकसाध्यसुखानुभवो यो भवति स परमात्मलोकानुभवपाथोधेर्विन्दुतुल्य एव। सर्वसुखानुभवानां परमात्मानुभवे समाविष्टत्वात् यथा कूपादिना यादृशं स्नानावगहनादिकार्थं भवति तत्सर्वं महातडागोदके समाविष्टं भवति तद्वत् प्रकृतेपीति। ततो भगवतैकशरणा ब्रह्मविदो न कामयन्ते प्रजामिति।

(ते हस्मेत्यादि) ते ह ब्रह्मविदः पुत्रैषणाया अत्र पुत्रैषणापदेन "जया मे स्यादथ प्रजायेय" इत्यादिप्रकारणेन या कथिता सा गृह्यते, वित्तैषणायाश्चेत्यनेन "वित्तं मे स्यादथ कर्म कुर्वीय" इत्यनेन याकथिता तस्या ग्रहणं भवति। वित्तं स्वर्णरजतादि धनविषयिणीच्छेत्यर्थः। विस्तैषणायाश्चेत्यनेन कलत्रपुत्रवित्तकर्मसाध्यसकललोकविषयिणीच्छा परिगृह्यते। पुत्रैषणाद्येषणात्रयात् व्युत्थाय। एषणात्रयं परित्यज्य यथाविधि संन्यासं परिगृह्येत्यर्थः। अथानन्तरं शरीरयात्रानिर्वाहाय भिक्षाचर्यं भिक्षाटनं चरन्ति कुर्वन्ति। एतदुपलक्षणम् सर्वसंन्यासधर्मानुष्ठानस्यात्राप्राप्तत्वेन पारिव्राज्यं विधीयते इति। या हि पुत्रैषणा सैव वित्तैषणा सा लोकैषणा। एतेषामेषणा-

**नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हिशीर्य्यतेऽसङ्गो न हि सज्जतेऽसितो न व्यथते न रिष्यत्येतमुहैवैते न तरत इति अतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं**

त्रयाणां परस्परमवर्जनीयसम्बन्धात् एते एषणे उभे एव भवतः सर्वथा साध्यसाधनविषयकैषणाद्वितयमेव परिवक्ष्यतीत्यर्थः।

(स एष एव इत्यादि) स एष समानप्रतिष्ठाधारभूतः अथात आदेशो नेतिनेतीत्यादिना निर्दिष्टोऽयमात्मा स एषः समानप्रतिष्ठाधारभूत इति। अगृह्योरूपस्याद्यभावेनेन्द्रियग्रहणायोग्यत्वात् चक्षुरादीन्द्रिय-द्वारा न गृह्यते कथमपि गृहीतो ग्राह्यो न भवति। अशीर्यः खण्डयितु-मयोग्यो निरवयवत्वात् न शीर्यते विशीर्णो न भवति कथमपि। असंगः सर्वलेपरहितत्वात् न कुत्रचिदपि सज्जते पापात्मकदुरदृष्टफलं दुःखेना-नुभवति। असितोऽस्त्रादिना न व्यथते व्यथां दुःखं नानुभवति, न वा शस्त्रादिना रिष्यति हिंसितो भवति कर्मबन्धनराहित्येन दुःखभाग् न भवति न वा हन्तेः कर्म कदाचिदपि न भवतीति।

(एत मु इत्यादि) अतोऽस्मात् शरीरयात्रालक्षणात् हेतोः पापमकरवं पापकर्मणः अनुष्ठानं कृतवान् तेन मे नरकपातो भविष्यति। कल्याण-मकरवम् कल्याणकर्मणोऽनुष्ठानं नाहं कृतवानित्याकारिके उभे अपि चिन्ते एनं पूर्वोक्तं ब्रह्मज्ञानिनमधिकारिणं न तरतो न स्पृशतः पाप-पुण्यचिन्तापि अपगता भवति। सर्वदुरितनिवृत्तिलक्षणब्रह्मज्ञानलक्षण-महाफलस्य प्राप्तत्वादिति भावः। कथं पापपुण्ययोः स्पर्शो न भवति। ब्रह्मज्ञानिनां तत्र कारणं दर्शयितुमाह--

(उ हैवैष इत्यादि) उ ह यस्मात्कारणात एष ब्रह्मज्ञानी एतस्मि-न्शरीरस्थितिनिर्वर्तकभूलोके वसन् एते पुण्यपापे तरति तीर्णवान् तत

कृताकृते तपतः ॥२२॥

तदेतदृचाभ्युक्तमेष नित्यो महिमा ब्राह्मणस्य न वर्द्धते कर्म्मणा नो कनीयान् तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्म्मणा पापकेनेति तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः

एनं ब्रह्मज्ञानिनं कृताकृते: कृतं शास्त्रविहिताग्निहोत्रादिजनितं सुकृतम्। अकृतं शास्त्रप्रतिषिद्धकर्मानुष्ठानेन जनितं दुष्कृतम्। एते सुकृतदुष्कृते ब्रह्मज्ञानिनं यतो न तपतः स्वकीयं स्वकीयं फलं नानुभावयतः ब्रह्मज्ञानेनाग्निना तज्जनकलाशक्ते विनाशितत्वात्। ते फलसम्बन्धिनं कर्तुं न प्रभवतः। एवंविदि पापं कर्म न श्लिष्यते इत्यश्लेषश्रवणादिति ॥२२॥

(तदेतदित्यादि) तदेतत् ब्रह्मज्ञानिनां पुण्यपापस्पर्शो न भवतीति अधिकृत्य ऋचामन्त्रेणाभ्युक्तम् कथितम्। स्वरूपतस्तां ऋचं पठति।

(एष नित्य इत्यादि) ब्राह्मणस्य ब्रह्मज्ञानिन एष महिमा महत्त्वं नित्यः स्वभावसिद्धः ब्रह्मज्ञानोत्तरकालं यावदात्मभावितय नुवर्तते एवेति। किमाकारकोयं ब्रह्मज्ञानिनां महिमा तत्राह—

(नो वर्धते इत्यादि) कर्मणा शुभात्मकेन पुण्यात्मककर्मणा न वर्धते शुभाख्यकर्मणाऽतिशयवान् न भवति। न वा कर्मणा पापात्मकेन कनीयन् हीनो न भवति। शुभाशुभप्रयोज्यवृद्धिह्रासवान् न भवतीत्यर्थं। तस्यैव स्यात् पदवित्। स यस्यायं महिमा स तस्य ब्रह्मणः यत्पदम् स्वरूपं पद्यते प्राप्यते इति पदं स्वरूपं तत् वित् भवति ब्रह्मस्वरूपज्ञाता भवतीत्यर्थः। स ब्रह्मस्वरूपवित् पुण्यपापात्मककर्मप्रयोज्योत्कर्षापकर्षशून्यो भवति। एतादृशो हि महिमा ब्रह्मविदामिति। पूर्वोक्तमहिमज्ञानफलं दर्शयति।

**समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं**

( तं विदित्वेत्यादि ) तं ब्रह्मविदो मानं विदित्वा सम्यगवगत्य पापकेन संसारजनकेन शुभाशुभेन कर्मणा न लिप्यते तादृशकर्मप्रयोज्यलेपरहितो भवतीत्यर्थः ।

(तस्मादेवं विदित्वादि) यस्मात् कारणाद् ब्रह्मविद् एवं महिमा तस्मात्कारणात् एव वित् शास्त्रजनितज्ञानवान् शान्तः शमयुक्तः तत्र शमो नाम अन्तरिन्द्रियनिग्रहलक्षणः, दान्तो दमयुक्तः दमोनाम बाह्येन्द्रियनियमन लक्षणः उपरत उपरतिमान् । शास्त्रप्रतिषिद्धकाम्यादिकर्मसूपपरमणमुपरतिः । तितिक्षुः तितिक्षा क्षमा तद्युक्तः सर्वप्राणिसु क्षमाशीलो भूत्वा समाहितः समाहितचित्तः एवं यथोदितलक्षणको भूत्वा आत्मनि जीवात्मनि आत्मानं परमात्मानम् जीवान्तर्यामिणं पश्यति पश्येत् । तथा आत्मानं परमेश्वरं साकेताधिपतिं सर्वं सर्वशरीरकं सर्वं जडचेतनः शरीरं विद्यते यस्येत्थं भूतं च तं पश्यति पश्येत् जीवेपरमात्मानं सर्वशरीरकं पश्येदित्यर्थः ।

(नैवं पाप्मेत्यादि) एनं ब्रह्मविदं पाप्माशुभाशुभलक्षणं विहितप्रतिषिद्धजनितं कर्म न तरति न प्राप्नोति । अयं तु ब्रह्मज्ञानी सर्वं पाप्मानं पुण्यपापलक्षणं कर्म तरति सर्वपाप्मभ्योऽतिक्रान्तो भवति भगवत्कृतया सर्वपाप्मविनिर्मुक्तो भवतीति भावः ।

(नैनं पाप्मा तपतीत्यादि) एनं पूर्ववर्णितं ब्रह्मज्ञानिनं पाप्मा शुभाशुभं कर्म न तपति न बाधते स्वफलानुभवद्वारेण बाधनालक्षणं दुःखं नोत्पादयति प्रत्युतायमेव ब्रह्मज्ञानी सर्वं पाप्मानं पुण्यपापलक्षणं तपति बाधते दहतीत्यर्थः । अयमाशयः "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन । नहि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति भगवद्वचनेन

पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजो विचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि

ज्ञानी भक्तः सर्वं शुभाशुभकर्मवह्निस्तूलराशिवत् समूलकाषंकषति । तत्र यानि संचितानि क्रियमाणानि तेषां दाहो ज्ञानाग्निना भवति, प्रारब्धकर्मणां विनशस्तु यावज्जीवं भगवत्कैंकर्यंकरणादेव भवतीति विवेक इति भावः। प्रकरणार्थमुपसंहरन्नाह ।

( विपापो विरजइत्यादि ) सोयं ब्रह्मज्ञानं। ज्ञानाग्निदग्धकर्मा- विपापः विगतपाप शुभाशुभलक्षणं यस्मात्सविपापः पापरहितः विरजो विगतं रजो यस्मात्तत्तथा विराग इत्यर्थः अविचिकित्सः न विद्यते विचिकित्सा यस्य स अविचिकित्सः सर्वप्रकारकसंशयशून्यः "भिद्यते हृदय- ग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्यादिश्रुत्यन्तरात् । सर्वप्रकारकसन्देहरहितः ब्राह्मणो भवति ब्रह्म- विद्भवतीत्यर्थः । अत्र यद्यपि ब्राह्मण इति शब्दः पश्चात् निर्दिष्टत्वात् विधेय इवाभाति तथापि ब्राह्मणशब्दस्यौचित्यादुद्देश्यसमर्पकत्वमेवेति । एवं च ब्राह्मणो ब्रह्मज्ञानबलात् विगतपापो विरजो भवतीत्यर्थः सम्पद्यते इति"

(एष ब्रह्मलोक इत्यादि) हे सम्राट् आत्मन्येवात्मानं पश्येदित्यादिना द्रष्टव्यतयोक्तो यः एष एव ब्रह्मलोको ब्रह्मैव लोकोब्रह्मलोक एवं प्रकारेण याज्ञवल्क्यो राजानं वैदेहं प्रत्युवाच प्रोक्तवानिति ।

(सोहमित्यादि) याज्ञवल्क्यस्यैवं वचनं श्रुत्वा राजा जनकः प्राह हे याज्ञवल्क्य! सोहं भवद्भिरनुशिष्ट ब्रह्मविद्योहं भगवते पूजावते विदेहान् सर्वमेव विदेहराज्यं भवते ददामि प्रयच्छामि मां स्वकीयं देहमपि दास्याय पादप्रक्षालनादिसेवार्थं ददामि इत्येवं क्रमेण राजाजनकस्तमुवाचेति

माञ्चापि सह दास्यायेति ॥२३॥

स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ॥२४॥

स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्माभयं

भावः ॥२३॥

एवं प्रकारेण जनकयाज्ञवल्क्याख्यायिकायां यः परमात्मोपास्यतया प्रतिपादितः स उपासनाभेदेनोपासनाकर्त्रे भोगं मोक्षं च ददातीति श्रुतिर्दर्शयति–

(स वा एष महानज इत्यादि) स वा एष महान् सर्वव्यापकोऽजो नित्य उत्पत्तिविनाशरहितः आत्मा अन्नादो वसुदानो वसुदानो धनदातेति क्रमेण य उपासक एवमनेनप्रकारेण वेद विजानाति तदुपासनं करोति स उपासको वसुलोकभोग्यं सुवर्णगवादिकं धनं विन्दते प्राप्नोति। ननु धनादिफलदायकत्वं कर्मणः कार्यं तत् कथमीश्वरप्रसादात् तत् स्यादिति चेन्न फलमत उपपत्तेरितिसूत्रे कर्माराधितात् परमपुरुषादेव सर्वं फलं प्राप्नोत्याराधकः सेवाराधितराजवदित्यादिना समाहितत्वात् इति ॥२४॥

तदेवं परमात्मनो लौकिकफलप्रदत्वं प्रदर्श्य मोक्षं प्रदत्वं दर्शयितुमाह–

(स वा एष महानज इत्यादि) स वा एष महान् सर्वव्यापकः आत्मा परमेश्वरः अजरो जरया रहितः अमरो मरणधर्मशून्यः असंसारीत्यर्थः अभयं भयरहितः एतादृश आत्मा ब्रह्म निरतिशयं बृहत्। कुत एवं तत्राह–

(अभयं वै ब्रह्मेति) अमृतमभयमेतद्ब्रह्मेति निरुपाधिका भयत्वा-भयत्वस्य परब्रह्मत्व प्रसिद्धेः। एतादृशविज्ञानस्य फलं दर्शयितुमाह–

(अभयं वै ब्रह्म भवतीत्यादि) य उपासकः अजरामरादिविशिष्ट

वै ब्रह्माभय ।ह वै ब्रह्म भवति य एवं वेद ॥२५॥

इति बृहदारण्यकोपनिषद् चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

परमात्मानं वेद विजानाति तादृशधर्मविशिष्टस्य ब्रह्मण उपासनं करोति स अभयं ब्रह्म भवति आविर्भूतब्रह्मस्वरूपो भवति । यद्यपि परमात्मनोऽवयवरूपत्वात् प्रागपि जीवो ब्रह्मलक्षण एव तथापि उपासनया तिरस्कृतकर्मजाल आविर्भूतब्रह्मस्वरूपो भवति, मलघर्षणेन स्वच्छादर्शादिति ॥२५॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

સમરીતિર્જઇદાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવ્યો મહામતિઃ॥

Ruchir Nagpal

# अथ चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम्

**अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥१॥**

अथेदमीयचतुर्थब्राह्मणे परमात्मोपदेशं कृतवान् यस्य परमात्मनो ज्ञानेन संसारिणां संसारनिवृत्ति-भगवल्लोकप्रापक परमप्रयोजनं सम्पन्नं स्यात्तदेव परमात्मतत्त्वमिहाप्युपदेक्ष्यतीति तदर्थमयमारम्भो भवति। ननु इदं पंचमं ब्राह्मणं किमर्थमारभते एतस्य शब्दतोऽर्थतश्च पठितत्वात् केवलमिह पुनरस्य पठनं पिष्टपेषणमिव भवत् पुनरुक्तिदोषमावहतीति चेत्सत्यम्। पूर्वमपक्ववैराग्यो याज्ञवल्क्यः संन्यासग्रहणेच्छायामेव मैत्रेय्यै परमात्मतत्त्वमुपदिष्टवान्। ततः स्वकीयवैराग्यमपक्वं संन्यासायोग्यमिति मत्वा जीवनयात्रानिर्वाहाय "षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" इति स्मार्तवचनमनुस्मरन् किंचित्कालं जनकादिभ्यो विद्योपदेशद्वारा धनसंचयं कृत्वा गृहे प्रतिवसन् शास्त्रानुकूलकामोपभोगं कुर्वाण एव नित्यनैमित्तिककर्मानुष्ठानद्वारा पूर्ववैराग्यापहारकं कर्म क्षपयन् निष्पन्नदृढतमवैराग्यो गृहकर्मासक्ततया विस्मृतपरमात्मतत्त्वायै मैत्रेय्यै पुनरुपदेशमारभत। तदर्थमेवास्य पंचमब्राह्मणस्य पुनरुपदेशः पुनरुक्तिदोषं नावहति। अपि च पंचम ब्राह्मणाख्यायिकयेदमपि दर्शितं यत् वैराग्यमन्दतायां संन्यासे नाधिकारः प्रत्युत दृढवैराग्यवतामेव संन्यासेऽधिकारो याज्ञवल्क्योपि अदृढवैराग्ये संन्यासं न स्वीकृतवान् तथात्वे स्वकीयहानिमाशयन् तदा का कथा तदन्येषाम्। पञ्चमब्राह्मणस्य विशेषपदानामेव केवलमंत्रव्याख्यानं करिष्येऽवशिष्टानि पदानि

**मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्राजिष्यन्वा अरेऽहमस्मात्स्था-
नादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥२॥**

**सा होवाच मैत्रेयी यन्नु मे इयं भगोः सर्व्वा पृथिवी वित्तेन
पूर्णा स्यात्स्यां न्वहं तेनामृताऽऽहो३ नेति नेति होवाच याज्ञवल्क्यो
यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु**

पूर्वं तु व्याख्यातान्येवेति । अथवा मैत्रेयी ब्राह्मणोक्तस्य ब्राह्मणस्यं कार्थ्यत्र-प्रदर्शनाय पुनरारम्भ इति ।

( अथ ह याज्ञवल्क्यस्येत्यादि ) अथ हेति शब्दो वृत्तावद्योतकः याज्ञवल्क्यस्य तदाख्यमुनेर्द्वे भार्ये पत्न्यौ बभूवतुरास्ताम् तत्रैका मैत्रेयी द्वितीया च कात्यायनी तयोर्द्वयोः पत्न्योर्मध्ये या खलु मैत्रेयी सा ब्रह्मवादिनी ब्रह्मवदनशीला बभूव ब्रह्मवादनिरता आसीत् परित्यक्तगृहव्यापारा । अपरा तु कात्यायनी तर्हि तदानीं तस्मिन्काले स्त्रीप्रज्ञैव स्त्रीणां सर्वसाधारण-महिलानां या उचिता गृहव्यापारार्थाविनियोजनाग्निपरिचरणादिविषया प्रज्ञा बुद्धिस्तादृशप्रज्ञावत्येवासीत् । अथान्तरं यदा मुनेर्दृढ वैराग्यं सम्पन्नं तदा स याज्ञवल्क्यः अन्यद्वृत्तं गार्हस्थ्यलक्षणविलक्षणं तूर्याश्रममुपा-करिष्यन् उपाश्रयिष्यन् ? 'हे मैत्रेयि' इति सम्बोध्य तामुवाच प्रोक्तवान् । हे मैत्रेयि ! अहमस्मात् स्थानात् गृहस्थलक्षणात् प्रव्रजिष्यन् प्रवृज्यां गृहीतुमिच्छन् अस्मि, ततो मद्गमनान्तरं कदाचित्ते स्वसपत्नीतो धनविभागे कलहो मा भवतु अतः कात्यायन्या सह तवान्त धनविभागं करवाणीति । स्वपत्यैवमुक्ता सा मैत्रेयीति प्रत्युवाच हे भगवन् यदि सर्वा सम्पूर्णा पृथिवी वित्तेन धनधान्यादि नापूर्णा परिपूर्णा मां प्रति उपस्थिता मामाश्रयेत् तथापि किमपममृतभागिनी स्यामाहो न वेति । एवं तद्वचनमाकर्ण्य मुनिराह नत्वममृतभागिनी भविष्यसि धनपूर्णा पृथिवीलाभेनापि, किन्तु यथाऽन्येषां धनवतां जीवनं तथैव तवापि स्यात् नतु अमृतत्वस्य धनादि प्रत्यशायि करणीया "तमेव विदित्वाऽतिमृत्युमेति नान्यः

नाशास्ति वित्तेनेति ॥३॥

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेत्थ तदेव मे विब्रूहीति ॥४॥

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥५॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु

पन्था विद्यतेऽयनायेति श्रुत्यन्तरादिति ॥३॥

ततः परं सा मैत्रेयी प्रत्युवाच हे भगवन् येन साधनेन वित्तादिना भोगभागिनस्यां तेन किमहं करिष्यामीत्यतो यदेव भगवान् अमृतसाधनं जानासि तदेव मे कथयेति भावः ॥४॥

ततः स मुनिरुवाच हे भवति त्वं नः प्रिया अनुकूला सती प्रियमेवावृधत् वर्धितवती अनुकूलमाचरणादिना । अतस्त्वयोपरि तुष्टोऽहममृतत्वसाधनं जिज्ञासमानायै भवत्यै तत्साधनं कथयिष्यामि कथयतो मे वाक्यं निदिध्यासस्व सावधानमनसा शृणु येन मदीयवाक्यं विफलं न भवेत् त्वं च सफला भवेरित्येवं याज्ञवल्क्यः प्रोवाचेति भावः ॥५॥

ततः स मुनिराह अरे मैत्रेयि पत्युः प्रियस्य कामाय संकल्पाय तत्संकल्पं सफलीकर्तुमित्यर्थः पतिः प्रियो न भवति पत्युः प्रियत्वमहमस्याः प्रियः स्यामिति पतिसंकल्पसाफल्याय न भवति पतिसंकल्पाधीनं न भवति यथा स्वाध्यायाध्ययनं सफलीकर्तुं यज्ञ इति कथिते स्वाध्यायनस्य फलं यज्ञ इति सिद्ध्यति तद्वत् संकल्पसफलनायै प्रियत्वमिति कथनेन संकल्पाधीनं प्रियत्वमिति

कामाय पतिः प्रियो भवति, न वा अरे जायायैः कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति, न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति, न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति, न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति, न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति, न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति, न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति, न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति, न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति न वा अरे भूतानां

सिद्धयति । एवं चाहं प्रियः स्यामस्या इति पतिसंकल्पाधीनं नयति प्रियत्वं किन्तु आत्मन. परमेश्वरस्य सर्वशक्तिविशिष्टस्य कामाय संकल्पादेव पतिः प्रियो भवति । परमात्मनः कृपयैव भवतीति भावः । एवमन्योपि मंत्रो व्याख्येयः । न वारे ब्रह्मणः कामायेति मंत्रे ब्रह्मपदं ब्राह्मणत्वजात्यवच्छिन्नपरकमिति क्षत्रियादिपदमपि तत्तद्वर्णबोधकमेव प्रकरणादिति । एवं सर्वस्य कामाय सर्वं प्रिय भवतीति मन्त्रपर्यन्त- मंत्रा व्याख्येयाः । एतावता किमायातं तत्राह–

( आत्मा वारे द्रष्टव्य इत्यादि ) यस्मात्कारणात् प्रियप्रियादीनां प्रियत्वं परमेश्वरसंकल्पाधीनं तस्मात् कारणात् आत्मा परमात्मा द्रष्टव्यः तस्य परमात्मनः प्रसन्नतायैव परमात्मैव द्रष्टव्यः दृष्टो हि स परमात्मा

मा (का)माय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति, न वा अरे सर्व्वस्य कामाय सर्व्वं प्रियं भवत्यात्मनस्तु कामाय सर्व्वं प्रियं भवति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो

प्रसन्नो भवन् सर्वेषां पदार्थानां प्रियप्रियादिवत् तदधिकं वा प्रियत्वमापादयितुं शक्नोति "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखता"मिति श्रुतेः परमात्मदर्शनस्य किं फलं भवतीति दर्शयितुमाह–

(मैत्रेय्यात्मनो वेत्यादि) अत्र मंत्रे विज्ञानपदं निदिध्यासनपरकं स्थानप्रमाणात् पूर्वं दर्शनश्रवणमनननिदिध्यासनानि कथितानि। अत्र निदिध्यासनं न कथितं तत्स्थाने विज्ञानमिति कथितमित्यतोऽत्र विज्ञानपदं निदिध्यासनमेव बोधयतीति एवं च दर्शनसमानाकारकथनविषयीकृते सति परमात्मनि परमात्मप्रसादात् सर्वंविदितं भवति सर्वं तस्य ध्यातुः सर्वं प्रियमेव भवतीति। ननु यदा जगत् परमात्मभिन्नं तदा परमात्मनि विदिते कथं तद्भिन्नं जगत् विदितं भवेत् नहि घटे विदिते पटो विदितो भवति तत्राह–

(ब्रह्मतमित्यादि) अत्र ब्रह्मपदं ब्राह्मणबोधकम्। यः आत्मनः परमात्मनोऽन्यत्र स्थितं न तु परमात्मनि स्थितम् ब्रह्मात्मकं स्वनिष्ठं ब्राह्मणादिवर्णं वेद विजानाति तं ब्रह्म परादात् पराकुर्यादभिभवेदित्यर्थः। भिन्नत्वेन ज्ञातो ब्राह्मणादिवर्ग एव तं संसारभाजं करोतीति। मन्त्रान्तरेपि एवमेवार्थः करणीयः। अथैवमपि सर्वस्य वस्तुनो ब्रह्माधारतया ब्रह्मात्मकत्वेपि ब्रह्मात्मकस्य शरीरभूतस्य जगतोऽवयवीभूत ब्रह्मभिन्नत्वेन ज्ञातेन तज्ज्ञानेन तज्ज्ञानासम्भवात् कथं परमेश्वरे ज्ञाते इदं सर्वं ज्ञातं स्यात् इत्याशंक्य सर्वस्यापि परमेश्वरशरीरत्वात् शरीरवाचकशब्दानां शरीरिपर्यन्तगतत्वात् इदं सर्वमिति शब्दद्वयाभ्यामन्यैरपि शब्दैस्तत्तत् शरीरकं ब्रह्मैव कथ्यते इत्याशयेनाह–

निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्व्वं विदितम् ॥६॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद, लोकास्तं परादुर्य्योऽन्यत्रात्मनो लोकान्वेद, देवास्तं परा दुर्योऽन्यत्रात्मनो देवान्वेद, वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद, भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद, सर्व्वं तं परादाद्योऽन्यत्रात्मनः सर्व्वं वेदेदं, ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि सर्वाणि भूतानीदं सर्व्वं यदयमात्मा ॥७॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥८॥

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥९॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥१०॥

स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्व्वाणि च भूतान्यस्यैवैतानि सर्व्वाणि निश्वसितानि ॥११॥

(इदं ब्रह्मेदमित्यादि) ततश्च परमात्मनि विज्ञाते इदं सर्वं विदितं भवतीत्यस्य सर्वशरीरकं ब्रह्म विदितं भवतीत्यर्थः सम्पद्यते इति ॥६॥

एवं जगत् हेतुताविशिष्ट परमेश्वरस्य भगवतः साकेताधिपतेरुपासनां

**स यथा सर्व्वासामपां समुद्र एकायनमेवं सर्व्वेषां स्पर्शानां त्वगेकायनमेवं सर्व्वेषां रसानां जिह्वैकायनमेवं सर्व्वेषां गन्धानां नासिकैकायनमेवं सर्व्वेषां रूपाणां चक्षुरेकायनमेवं सर्व्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्व्वेषां सङ्कल्पानां मन एकायनमेवं सर्व्वासां विद्यानां हृदयमेकायनमेवं सर्व्वेषां कर्म्मणां हस्तावेकायनमेवं सर्व्वेषामानन्दानामुपस्थ एकायनमेवं सर्व्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां वेदानां वागेकायनम ।।१२।।**

**स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः**

दर्शयित्वोपासनोपकरणभूतमनःप्रभृतिकरणसमुदायस्य नियमनकरणाय प्रकारम ह–

(स यथा दुन्दुभेर्हन्यमानस्येत्यादि) एते मन्त्राः पूर्वमेव व्याख्याता इति तद्व्याख्यानाय न पुनरिह प्रयत्यते ।।१२।।

(स यथा सैन्धवघन इत्यादि) यथा येन प्रकारेण सैन्धवघनो लवणखण्डो लवणावयव इत्यर्थः अनन्तरो अन्तरावयवरहितोऽबाह्यो बाह्यावयव व्यतिरिक्तश्च सर्व्वावयवो यथा रसघन एकाकार एव भवति । यद्यप्यत्रान्तरोऽबाह्यश्च रसघन एव प्रकारेण कथनं युक्तं तथापि अन्तरत्व-बाह्यत्व-शून्यमध्यवर्तिनामपि अवयवानां ग्रहणं भवतु अतोऽनन्तरोऽबाह्य इत्येव निषेधमुखेन श्रुतौ निर्देशः कृतः एवं च व्यतिरेकमुखद्वारा प्रतिपादनेन निरवयवात्मसाधारण्यमपि फलितं भवतीति ज्ञातव्यम् । एवमेवायं परमात्मा विज्ञानघन जीवशरीरक इति । यद्यपि जीवपरमेश्वरयोः परस्परविरुद्धधर्मवत्वेन स्वरूपत ऐक्यं नास्ति ततश्च सामानाधिकरण्यं

समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१३॥

सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥१४॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसायते तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कं रसयेत्तत्केन कमभिवदेत्तत्केन कं शृणुयात्तत्केन

न सम्भवति तथापि अवयवावयविभावमादायैवासामानाधिकरण्यादिकमुपपद्यते ॥१३॥

(सा होवाच मैत्रेयीत्यादि) ततः सा मैत्रेयी प्रोवाच भगवान् ! अत्रैवस्मिन्नेवार्थेन प्रेत्य सञ्ज्ञास्तीत्येवास्मिन्नेवार्थे । मा मां मोहं मोहमध्यमायीवत् प्रापितवान् भवानित्यर्थः । अत्र विशेषतो यद्वक्तव्य तत् पूर्वप्रकरणे एव प्रतिपादितम् ।

( न वाहमिमं विजानामीत्यादि ) अनुच्छित्तिरित्यादि न विद्यते उच्छित्तिर्विनाशो यस्य स अनुच्छित्तिरविनाशीत्यर्थः अनुच्छित्तिरविनाशोधर्मो यस्य स अनुच्छित्तिधर्मा तस्यात्मनो यो ज्ञानलक्षणो धर्मः सोप्यविनाशी एवेति ॥१४॥

(यत्र हि द्वैतमिव भवतीत्यादि) व्याख्यातपूर्वोयं मंत्रः

(एतावदेव इत्यादि) अरे मैत्रेयि ! एतावदेव तत्त्वममृतार्थिभिर्ज्ञातव्यमित्यर्थः कारणे कार्यवाची शब्द उपचारात्प्रयुक्तः इति होक्त्वा एवं

कं मन्वीत तत्केन कं स्पृशेत्तत्केन कं विजानीयाद्येनेदं सर्व्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ।।१५।।

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम् ।।५।।

# अथ पंचमाध्यायस्य षष्ठं ब्राह्मणम् ।।६।।

अथ वंशः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ।।१।।

आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्य्यायणात्पाराशर्य्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ।।२।।

प्रकारेण याज्ञवल्क्यस्तां यथावत कथयित्वा विजहार यथाभिलषितं संन्यासं कृतवानित्यर्थः ।।१५।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
पञ्चमं ब्राह्मणम् ।।५।।

(अथ वंश इत्यादि) तत्र पौतिमाष्यनामक आचार्यः स च गौपवन नामकादाचार्याद् विद्यां प्राप्तवानित्यर्थः एवं गौपवनएवाचार्यः कौशिका-

घृतकौशिकाद् घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥३॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

समाप्तोयं चतुर्थोऽध्यायः ॥४॥

दाचार्यात् प्राप्तविद्यो बभूवेत्येवं क्रमेण वंशसमाप्तिपर्यन्तं व्याख्येयम्। स्वयंभूरित्यस्य स्वयमेव भवतीति स्वयंभूः व्यक्त्यन्तरादुपदेशमन्तरेण विद्याप्रवर्तको यो भवति स स्वयंभूरित्यर्थः ब्रह्मणे सर्वगुरवे नम इति। ननु पूर्वमपि आचार्यनामानुकीर्तनं कृतमेव पुनः कीर्तनं किमर्थमिति चेन्न मंगलार्थत्वात् आचार्यपरम्परानुकीर्तनं यस्मात्मंगलं प्रयोजनं ततस्तदनुकीर्तनं पुनरपि कृतमतो न पुनरुक्तिरिति ॥१।२।३॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

समाप्तश्चतुर्थोऽध्यायः ॥४॥